पं. फकीरचन्द्रशर्मणः पुस्तकम् २०., १५१.

# KAVYADIPIKA

A

MANUAL OF SANSKRIT RHETRIC

INTENDED FOR, AND SUITED TO THE CAPACITY OF, THE UNIVERSITY STUDENTS

WITH काव्यदीपिका

A SHORT ACCOUNT, IN ENGLISH, OF THE, RISE PROGRESS AND DECLINE OF SANSKRIT POETRY.

BY

KANTI CHANDRA VIDYARATNA.

EDITED WITH A FULL COMMENTARY

BY

*PANDIT JIBANANDA VIDYASAGARA, B. A.*

*Superintendent Free Sanskrit College, Calcutta.*



CALCUTTA :

PRINTED AT THE SARASWATI PRESS.

1886.

To be had from Pandit Jibananda Vidyasagara, B. A.
Superintendent Free Sanskrit College, Calcutta

3004
2904

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

# एतानि मुद्रितसंस्कृतपुस्तकानि ।

१ आशुबोधव्याकरणम् २
२ धातुरूपादर्शः १॥
३ शब्दस्तोममहानिधिः ८
४ सिद्धान्तकौमुदी सरलासहिता १०
५ सिद्धान्तविन्दुसारः (वेदान्त) ॥
६ तुलादानादिपद्धतिः (वङ्गाक्षरैः) ४
७ गयाश्राद्धादिपद्धतिः १
८ शब्दार्थरत्नम् ॥।
९ वाक्यमञ्जरी (वङ्गाक्षरैः) ।०
१० छन्दोमञ्जरी तथा वृत्तरत्नाकर सटीक ॥०
११ वेणीसंहार नाटक सटीक ॥।०
१२ मुद्राराक्षस नाटक सटीक ॥।
१३ रत्नावली नाटिका सटीक ॥
१४ मालविकाग्निमित्र सटीक १
१५ धनञ्जय विजय सटीक ।०
१६ महावीरचरितनाटक ॥०
१७ साङ्ख्यतत्त्वकौमुदी सटीक २
१८ वैयाकरणभूषणसार १॥
१९ लीलावती ॥
२० वीजगणित ॥।
२१ शिशुपालवध सटीक (माघ) २
२२ किरातार्जुनीय सटीक १॥
२३ कुमारसम्भव पूर्वखण्ड सटीक ॥
२४ कुमारसम्भव उत्तरखण्ड ॥
२५ अष्टकम् पाणिनीयम् ॥०
२६ वाचस्पत्यम् (वृहदभिधान) १००
२७ कादम्बरी सटीक १॥
२८ राजप्रशस्ति ⁄
२९ अनुमानचिन्तामणि तथा अनुमानदीधिति ४

३० सर्वदर्शनसंग्रहः १
३१ भामिनीविलास सटीक ॥
३२ हितोपदेश सटीक ॥।
३३ भाषापरिच्छेदमुक्तावलीसहित ॥
३४ बहुविवाहवाद ।०
३५ दशकुमारचरित सटीक १
३६ परिभाषेन्दुशेखर ॥०
३७ कविकल्पद्रुम धातुपाठः ।
३८ चक्रदत्त (वैद्यक) १॥
३९ उणादिसूत्र सटीक २
४० मेदिनीकोष १
४१ पञ्चतन्त्रम् ॥
४२ विद्वन्मोदतरङ्गिणी (चम्पूकाव्य) ॥
४३ माधवचम्पू ।०
४४ तर्कसंग्रह ॥
४५ प्रसन्नराघव नाटक १
४६ विवेकचूडामणि ।⁄
४७ काव्यसंग्रह (संपूर्ण) ५
४८ लिङ्गानुशासन सटीक ।
४९ ऋतुसंहार सटीक ।⁄
५० विक्रमोर्वशी (सटीक) १
५१ वसन्ततिलक भाण ।⁄
५२ गायत्रीव्याख्या ॥०
५३ साङ्ख्यदर्शन (भाष्यसहित) २
५४ भोजप्रबन्ध ॥
५५ नलोदय सटीक ।⁄
५६ ईश केन कठ प्रश्न मुण्ड माण्डूक्य (सटीक सभाष्य) ५
५७ छान्दोग्य सटीक सभाष्य ५
५८ तैत्तिरीय ऐतरेय श्वेताश्वतर (उपनिषद्) सभाष्य सटीक २

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

श्रीलक्ष्मीधर - विद्यामन्दिर
देवप्रयाग
व्यवस्थापक: पं. चक्रधरजोशी

# काव्यदीपिका ।

विश्वविद्यालयच्छात्राणां पाठोपयोगी

सुगमः क्षुद्रकायः

## अलङ्कारसन्दर्भः ।

कान्तिचन्द्रविद्यारत्नभट्टाचार्य्येण

सङ्कलितः ।

बि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

विरचितया व्याख्यया समलङ्कृतः ।

इंलण्डीयभाषया लिखितेन संस्कृतसाहित्यशास्त्रस्य

संक्षिप्तेनेतिवृत्तेन समेतः ।

---

कलिकातानगर्य्यां

सरस्वतीयन्त्रे

मुद्रितः ।

इं १८८६ ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

श्री...-विद्यामन्दिर
देवप्रयाग (...)
व्यवस्थापक- पं. चक्रधरजोशी

# सूचीपत्रम् ।



CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

सूचीपत्रं सम्पूर्णम् ।

---

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

# काव्यदीपिका ।

## प्रथमशिखा ।

मातरं हृदये ध्यात्वा विशदाम्बुजवासिनीम् ।
बालानां सुखबोधाय क्रियते काव्यदीपिका ॥

'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये* ।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे' ॥

मम्मटः । (१)

---

* काव्यादनर्थनिवारणञ्च भवतीत्याहुः, तथा च मयूरभट्टः सूर्य्यशतकं विरचय्य महारोगाद्विमुक्त इति प्रवादः ।

---

प्रणम्य परमात्मानं श्रीजीवानन्दशर्मणा ।
व्याख्यया समलङ्कृत्य तन्यते काव्यदीपिका ॥

(१) काव्यमिति काव्यं कविकृतमलौकिकचमत्कारिवाक्यं यशसे कीर्त्तये ख्यातिलाभायेत्यर्थः रचयितुः प्रयोक्तुश्चेति शेषः । अर्थकृते धनाधिगमाय, व्यवहारविदे रामादिवत् प्रवर्त्तितव्यं न रावणादिवदित्यादि शिष्टाचारज्ञानाय, शिवेतरक्षतये शिवात् मङ्गलात् इतरममङ्गलमित्यर्थः तस्य क्षतये नाशाय भगवन्नामकीर्त्तनादिनेति शेषः । सद्यः पाठस्य श्रवणस्य च समनन्तरमेव परा महती निर्वृतिः आनन्दः तस्यै तथा कान्तासम्मिततया उपदेशयुजे उपदेशदानाय यथा कान्ताया उपदेशो मधुरतया रमते तथा मधुरभावेनोपदेशदानाय भवतीति शेषः ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

काव्यं हि पाठादिसमनन्तरमेव अनिर्वचनीय-विलक्षणानन्दाय, * कालिदासादीनामिव यशःसम्पत्तये, श्रीहर्षादेर्धावकादीनामिव धनाधिगमाय, लोकाचारादिपरिज्ञानाय, सुधामयेनोपदेशवचनेन रामादिवत्प्रवर्त्तितव्यं न रावणादिवत् इति सत्पथप्रवर्त्तनाय साधुविगर्हितवर्त्मनिवर्त्तनाय च, तत्तद्भाषासु व्युत्पत्तिलाभाय च यथायोगं कवेः पाठकानाञ्च भवतीति बहुफलतया काव्यस्य तल्लक्षणादिकमवश्यमवगन्तव्यं धीमतामिति प्रथमतः काव्यस्य लक्षणमाह,—

**कथ्यते काव्यम् "इष्टार्थव्यवच्छिन्ना पदावली"॥**

दण्डी।

इष्टा अलौकिकचमत्कारित्वेन सहृदयमनोरमा अर्थास्तैर्व्यवच्छिन्ना विलक्षणीकृता पदावली पदसमूहः काव्यम्। "रिपुस्ते मृतः" "पुत्रस्ते जातः" इत्यादिवाक्येन जनितस्य आह्लादस्य न लोकोत्तरत्वमिति (२) न तत्र काव्यत्वप्रसक्तिः। तथा च लोकोत्तरचमत्कारितया

---

* इदमेव काव्यस्य प्रधानफलमिति कारिकाक्रममनादृत्य प्रथममुपन्यस्तम्।

---

(२) इष्टेति। सहृदयमनोरमा सामाजिकमनःप्रह्लादका इत्यर्थः। विलक्षणीकृताः अलङ्कृता इत्यर्थः। लोकोत्तरत्वम् अलौकिकत्वं लोकेषु स्वतो यः सुखानुभवः, स लौकिकः, यस्तु काव्यनाट्यपरिशीलनजनितः स खल्वलौकिकः तादृशालौकिकानन्दजनकपदावली काव्यमिति निष्कर्षः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

सहृदयहृदयाकर्षि वाक्यं काव्यमिति फलितम्। तन्नाम वाक्यं काव्यं, यत् खलु विलक्षणचमत्कारितया बलादिव वशमानीय सामाजिकजनमनांसि रञ्जयति। यथा—

"मानुषीभ्यः कथं नु स्यादस्य रूपस्य सम्भवः।
न प्रभातरलं ज्योतिरुदेति वसुधातलात्" ॥ (३) अ० शा०

"उग्गिलदब्भकवला मई परिच्चत्तणच्चणा मोरी।
ओसरिअपाण्डुपत्ता मुअन्ति अस्सुं विअ लदाओ*" ॥ (४) अ० शा०

"अयि कठोर! यशः किल ते प्रियं
किमयशो ननु घोरमतः परम्।

---

*उद्गीर्णदर्भकवला मृगी परित्यक्तनर्तना मयूरी।
अपसृतपाण्डुपत्रा मुञ्चन्ति अश्रु इव लताः॥

---

(३) मानुषीभ्य इति। मानुषीभ्यः अस्य एतादृशस्येत्यर्थः रूपस्य सौन्दर्य्यस्य कथं नु केन प्रकारेण वा सम्भवः समुद्भवः स्यात् नैव स्यादित्यर्थः। प्रभातरलं लावण्यपूर्णं ज्योतिः तेजः वसुधातलात् पृथिव्याः न उदेति नोत्पद्यते।

(४) उद्गीर्णेति। उद्गीर्णाः परित्यक्ता इत्यर्थः दर्भाः कुशा एव कवला यासां यया तादृशी शकुन्तलायाः पतिगृहयात्राकाले तद्विरहदुःखादिति सर्वत्र योज्यम्। परित्यक्ताहारा इत्यर्थः। परित्यक्तं नर्त्तनं यया सा नृत्यपराङ्मुखीत्यर्थः। अपसृतानि गलितानि पाण्डुपत्राणि यासां तथाविधाः अतएव अश्रु वाष्पवारि इत्यर्थः मुञ्चन्ति त्यजन्ति।

(५) अयीति। रामं प्रति वासन्त्या उक्तिः। अयि कठोर! हे निष्ठुर इत्यर्थः ते तव यशः प्रजारञ्जनजनितमिति शेषः प्रियं प्रीतिकरं किल निश्चितम्। ननु देवेति शेषः अतःपरम् अस्मादन्यदित्यर्थः

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

किमभवद्विपिने हरिणीदृशः
कथय नाथ! कथं वत मन्यसे" ॥ (५) उक्त०

एतानि वाक्यानि पाठानन्तरमेव कर्मापि लोकोत्तरमानन्दं सहृदयानामातन्वन्तीति (६) तेषां काव्यत्वम्।

इति काव्यनिरूपणं नाम प्रथमशिखा।

---

## द्वितीयशिखा।

वाक्यस्वरूपमाह,—

**अन्वितैकार्थबोधे तु वाक्यं पदसमुच्चयः। (१)**

---

घोरं दारुणम् अयशः सीतानिर्वासनजनितमिति शेषः किम् जातः परमयशो नास्तीति भावः। विपिने अरण्ये हरिणीदृशः सीतायाः किमभवत् वृत्तमिति शेषः हे नाथ! हे प्रभो! कथय वद, वत खेदे, कथं मन्यसे किं विवेचयसि?

(६) आतन्वन्ति जनयन्ति।

इति प्रथमशिखा।

—००—

(१) अन्वितैकार्थबोधे इति। अन्वितस्य अन्वययुक्तस्य परस्परसम्बद्धस्येत्यर्थः एकस्य अर्थस्य बोधे सति तु पदानां सुप्तिङन्तरूपाणां समुच्चयः समूहः अनेकसङ्ख्यकपदावलीत्यर्थः तथाचान्तर्गतपदार्थसमुदितैकार्थबोधकं पदद्वयं वा पदसमुदायो वाक्यमिति फलितमिति भावः। तत्र पदद्वयं यथा राजा गच्छति, पदसमुदायस्य मूल एवोदाहरणं द्रष्टव्यम्।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

पदानां प्रत्येकं सार्थकत्वेऽपि तेषामर्थो नान्वितः, वाक्यन्तु तदन्तर्गतपदार्थसमुदितमेकमर्थं बोधयति। यथा, 'जननी सुताननं सस्नेहमीक्षते,'।

"सुप्तिङन्तं पदं" प्राह पाणिनिर्मुनिसत्तमः।

सुबन्तः तिङन्तश्च शब्दः पदम्। यथा, 'रामः' 'भवति' इत्यादि

शब्दः पुनस्त्रिविधः, यथाह मम्मट-भट्टः,—

'स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा"। (२)

अर्थोऽपि शब्दप्रतिपाद्यस्त्रिविध एव, वाच्यः, लक्ष्यः, व्यङ्ग्यश्च।

"वाच्यादयस्तदर्थाः स्युः" मम्मटेन यथोदिताः। (३)

वाचकादीनां क्रमेण स्वरूपमाह,—

---

(२) स्यादिति। अत्र अलङ्कारग्रन्थे शब्दः त्रिधा, वाचकः वक्ति अभिधया अर्थं प्रकाशयतीति वाचकः, लाक्षणिकः लक्षणया अर्थं प्रकाशयतीति लाक्षणिकः। व्यञ्जकः व्यञ्जनया अर्थं प्रकाशयतीति व्यञ्जकः।

(३) वाच्यादय इति। वाच्यादयः वाच्यलक्ष्यव्यङ्ग्या इत्यर्थः तदर्थाः तेषां वाचकलाक्षणिकव्यञ्जकानाम् अर्थाः, तत्र वाचकस्य शब्दस्यार्थः वाच्यः, लाक्षणिकस्य शब्दस्यार्थः लक्ष्यः, व्यञ्जकस्य शब्दस्यार्थः व्यङ्ग्यः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"साक्षात् सङ्केतितं योऽर्थमभिधत्ते स वाचकः" ।

मम्मटः । (४)

साक्षात् सङ्केतितस्तु 'अस्मात् शब्दादयमर्थो बोद्धव्य' इति शब्दस्य स्वाभाविक्या शक्त्या* व्याकरणादिना वा नियन्त्रितः । इयमेव शक्तिः "अभिधा" इत्युच्यते । अनया बोध्योऽर्थः वाच्यः, स च साक्षाद् बोध्यत्वेन प्रधानतया मुख्यार्थं इत्यपि अभिधीयते । यथा गो-शब्दोऽभिधया गलकम्बलादिमज्जीवविशेषरूपं, पाचकशब्दश्च पाककर्तृ-रूपश्चार्थं साक्षात् बोधयति । (५)

---

* शब्दस्य स्वाभाविकीं शक्तिं सर्वे नाद्रियन्ते, रूढ़स-ङ्केतिरेव शब्दानामर्थवाचने हेतुरिति केचिदाचक्षते, तथा च अभिधापि तन्मते लक्षणाव्यञ्जने इव आरोपितैवेत्यल-मतिगहनावगाहनेन ।

---

(४) साक्षादिति । साक्षात् अव्यवधानेनेत्यर्थः सङ्केतितं स्वतो नियमितम् अर्थं यः शब्दः अभिधत्ते प्रतिपादयति स वाचकः ।

(५) शब्दस्येति । स्वाभाविक्या स्वतःसिद्धयेत्यर्थः शक्त्या सामर्थ्ये-नेत्यर्थः । शक्तिश्च तत्तद्भाषा वादिभिर्नियमितेति बोध्यम् । व्याकर-णादिनेति आदिपदेन उपमानादयो गृह्यन्ते तदुक्तम् ।

शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद् व्यवहारतश्च ।
सान्निध्यतः सिद्धपदस्य वृद्धा वाक्यस्य शेषाद् विवृतेर्वदन्तीति ॥

नियन्त्रिता नियमिता निर्द्धारितेत्यर्थः । तत्र व्याकरणाद् यथा पाचक इत्यादि । उपमानाद् यथा गोसदृशो गवय इत्यादि । कोषाद् यथा विनायके विघ्नराजद्वैमातुर गणाधिपा इत्यादि । आप्तवाक्याद् यथा अयमश्वशब्दवाच्य इत्यादि । व्यवहाराद् यथा वृद्धेन युवानमुद्दिश्य गामानयेत्युक्ते तं गवानयनप्रवृत्त

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

श्री रघुनाथ-विद्यालय, देवप्रयाग (गढ़वाल) व्यवस्थापक-प. चक्रधर जोशी

लक्षणयाऽर्थबोधकः शब्दो लाक्षणिकः, तया बोध्योऽर्थः लक्ष्यः। लक्षणास्वरूपमाह विश्वनाथः,—

"मुख्यार्थबाधे तद्युक्तो यथाऽन्योऽर्थः प्रतीयते।
रूढ़ेः प्रयोजनाद्वासौ लक्षणा शक्तिरर्पिता" ॥ (६)

मुख्यार्थस्य अन्वयानुपपत्तिग्रहे तदर्थसम्बन्धी अन्योऽर्थः, रूढ़िप्रयोजनयोरन्यतरस्मिन् हेतौ सम्भवति, यथा

---

दृष्ट्वा बालोऽस्य वाक्यस्य सास्नादिमत्पिण्डानयनमर्थं प्रथममवधारयति ततो गां बधान अश्वमानयेत्युक्ते तथाकुर्वाणं युवकमवलोक्य गोशब्दस्य सास्नादिमत्पिण्डरूपमर्थम् आनयनशब्दस्य चाहरणरूपमर्थञ्च पृथगवधारयतीत्यादि। सिद्धपदसान्निध्याद् यथा प्रभिन्नकमलोदरे मधुनि मधुकरः पिबतीत्यादि। अत्र कमलोदरे मधुपानकर्तृत्वं भ्रमरस्यैवेति मधुकरशब्दो भ्रमरमेव बोधयतीति द्रष्टव्यम्। वाक्यस्य शेषाद् यथा यवमयश्चरुर्भवतीति वाक्ये यवशब्दः किं वासन्तशस्यविशेषबाधकः, उत यावनिकप्रसिद्धतदाख्यशस्यविशेषबोधक इति संशये तद्वाक्यशेषे वसन्ते सर्वशस्यानां जायते पत्रशातनम्। मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिन इति वाक्यशेषात् वासन्तयवमेव बोधयतीत्यादि। विवृतेर्विवरणाद् यथा रामो दाशरथिरित्यादि।

(६) मुख्यार्थेति। मुख्यार्थस्य अभिधेयार्थस्य बाधे अन्वयानुपपत्तिग्रहे तद् युक्तः मुख्यार्थसम्बन्धवान् अन्योऽर्थः यया शक्त्या प्रतीयते ज्ञायते सा शक्तिः अर्पिता आरोपिता अस्वाभाविकीत्यर्थः लक्ष्यते अनयेति व्युत्पत्त्या लक्षणा नाम सा च कचित् रूढेः प्रसिद्धेः, कचित् प्रयोजनाद्वा भवतीति द्विधा रूढ़िहेतुका प्रयोजनहेतुकेति चेत्यर्थः। इदञ्च हेतुद्वयमन्तरेण यस्य कस्यचित् सम्बन्धस्य सद्भावे लक्षणा नाङ्गीक्रियते इति बोध्यम्।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

प्रतीयते सा वृत्तिर्लक्षणा नाम। रूढ़िः प्रसिद्धिः, यथा, 'कलिङ्गः साहसिक' इत्यत्र कलिङ्गशब्दो देशविशेषरूपे स्वाभिधेयेऽर्थेऽसम्भवन् तद्देशवासिनः पुरुषान् बोधयति। प्रसिद्धिश्च अत्र हेतुः। 'गङ्गायां घोषः' इत्यत्र च गङ्गाशब्दः प्रवाहविशेषरूपं स्वाभिधेयमर्थं बोधयितुमसमर्थः सामीप्यसम्बन्धसम्बन्धिनं तटं बोधयति। हेतुश्चात्र शीतत्वपावनत्वातिशयबोधनरूपं प्रयोजनम्।

"उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम्।
विदधदीदृशमेव सदा सखे! सुखितमास्स्व ततः शरदां
शतम्" ॥ (७)

इयं हि कश्चिदपकारिणं प्रत्युक्तिरिति मुख्यार्थस्यान्वयानुपपत्तेः वैपरीत्यसम्बन्धेन अपकारादिरूपमर्थं ज्ञापयति, अपकाराद्यतिशयद्योतनञ्चात्र प्रयोजनम्।

**इत्येवं सा द्विविधा रूढ़िमूला प्रयोजनमूला च।**
**सेयं पुनर्द्विधा स्यादुपादानं लक्षणञ्चेति ॥**

उपादानलक्षणा लक्षणलक्षणा चेति सा लक्षणा पुनर्द्विविधा।

---

(७) उपकृतमिति। हे सखे! बहु उपकृतं त्वयेति शेषः तत्र विषये इति शेषः किमुच्यते न किमपीत्यर्थः भवता परं सुजनता सौजन्यं प्रथिता प्रकटिता, ईदृशमेव कर्मेति शेषः सदैव विदधत् अनुतिष्ठन् ततः विधानादित्यर्थः शरदां वर्षाणां शतम् अत्यन्तसंयोगे द्वितीया सुखितम् आस्स्व सुखं तिष्ठेत्यर्थः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

**स्वसिद्धये पराक्षेपोऽसावुपादानलक्षणा । (८)**

वाच्यार्थस्य अन्वयसिद्ध्यर्थं लक्ष्यार्थस्य बोधने वाच्यार्थस्यापि उपादानादियमुपादानलक्षणा यथा,—"यष्टयः प्रविशन्ति" इत्यत्र यष्टीनां स्वतः प्रवेशक्रिययाऽन्वयासम्भवात् प्रवेशान्वयार्थं स्वसंयोगिनः पुरुषा आक्षिप्यन्ते । अत्र च स्वार्थस्यापरित्यागादियम् "अजहत्स्वार्था" इति च कथ्यते ।

**परार्थमात्रबोधे तु भवेल्लक्षणलक्षणा । (९)**

सर्वथा स्वार्थपरित्यागेनान्यार्थमात्रबोधने इयं लक्षणलक्षणा । अतएवासौ 'जहत्स्वार्था' इति च भण्यते । यथा पूर्वोदाहृते, 'उपकृतं बहु तत्र' इत्यादौ ।

व्यञ्जनयाऽर्थबोधकः शब्दः व्यञ्जकः, तया बोध्योऽर्थो व्यङ्ग्यः । व्यञ्जनास्वरूपमाह,—

---

(८) स्वसिद्धये इति । स्वस्य मुख्यार्थस्य सिद्धये अन्वयबोधार्थं परस्य अपरार्थस्य लक्ष्यार्थस्येत्यर्थः आक्षेपे उपस्थापने बोधने इत्यर्थः सतीत्यर्थः असौ लक्षणा उपादानं ग्रहणं मुख्यार्थस्येति भावः तेन लक्षणा उपादानलक्षणा तथाच मुख्यार्थसमेतलक्ष्यार्थबोधिका लक्षणा उपादानलक्षणेति तात्पर्य्यम् । अजहत्स्वार्था न जहत् त्यजन् स्वार्थो यामिति अजहत्स्वार्था वाच्यार्थापरित्यागिनीत्यर्थः ।

(९) परार्थेति । परस्य अन्यस्य लक्ष्यस्येत्यर्थः अर्थमात्रस्य मात्रपदेन मुख्यार्थव्यवच्छेदः । बोधे सति तु लक्षणेन येन केनचित् सम्बन्धरूपेण चिह्नेनेत्यर्थः लक्षणा लक्षणलक्षणा । जहत्स्वार्था जहत् त्यजन् स्वार्थो यामिति सर्वथा वाच्यार्थपरित्यागिनीत्यर्थः ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

**"विरतास्वभिधाद्यासु * ययार्थो बोध्यतेऽपरः।**
**सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च" ॥(१०)**

विश्वनाथः।

अभिधायां लक्षणायाञ्च स्वं स्वमर्थं बोधयित्वा विरतायां ययाऽपरोऽर्थो बोध्यते सा वृत्तिर्व्यञ्जना नाम। शब्दवदर्थोऽपि अर्थान्तरव्यञ्जक इति प्रथमतो द्विविधा व्यञ्जना शाब्दी आर्थी च।

शाब्दी च द्विविधा, अभिधामूला लक्षणामूला च। यथाह विश्वनाथः,—

**"अभिधालक्षणामूला शब्दस्य व्यञ्जना द्विधा"।**

अभिधामूलामाह विश्वनाथः,—

**"अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते।**
**एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साभिधाश्रया" ॥ (११)**

---

* विश्वनाथादयः केचित् तात्पर्य्याख्यामतिरिक्तां वृत्तिं कथयन्ति तत एव 'अभिधाद्यासु' इति बहुवचनम्। वृत्तिमिमामन्ये न मन्यन्ते।

---

(१०) विरतास्विति। अभिधाद्यासु अभिधालक्षणातात्पर्याख्यासु वृत्तिषु विरतासु स्वं स्वमर्थं बोधयित्वा उपक्षीणासु यया वृत्त्या अपरोऽर्थः बोध्यते सा शब्दस्य अर्थादिकस्य च वृत्तिः व्यज्यते अनयेति व्युत्पत्त्या व्यञ्जना नाम।

(११) अनेकार्थस्येति। अनेकार्थस्य भिन्नार्थस्य शब्दस्य एकत्र एकस्मिन् अर्थे संयोगाद्यैः नियन्त्रिते निर्धारिते सति अन्यस्य अर्थस्य

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

संयोगाद्याश्च,—

"संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः *" ॥ (१२)

यथा,—"सशङ्खचक्रो हरिः" इति शङ्खचक्रसंयोगेन हरिर्विष्णुः । 'फणहीनो नागः' इति फणवियोगेन नागः सर्पः । 'रामलक्ष्मणौ' इति लक्ष्मणसाहचर्य्येण रामो दाशरथिः । 'रामार्जुनौ' इत्यत्र विरोधितया रामो भार्गवः, अर्जुनः कार्त्तवीर्य्यः । अर्थः प्रयोजनम् यथा— 'स्थाणुं भज भवच्छिदे' इति भवच्छेदरूपप्रयोजनसम्बन्धेन स्थाणुः शिवः न तु शाखाविहीनो वृक्षः । प्रकरणं प्रस्तावः यथा,—'यथाज्ञापयति देवः' इति देवो भवान् राजा वा । लिङ्गं विशेषकं चिह्नं यथा,—'कपर्दी भीमः' इति कपर्देन विशेषकेण भीमः शिवः । अन्यस्य प्रसिद्धार्थ-

---

* अनेकार्थस्य शब्दस्य कस्यार्थस्य बोधो भवतीत्यनिश्चये संयोगादयोऽर्थविशेषबोधने नियामका इत्यर्थः ।

---

धीहेतुः प्रतीतिकारणं या व्यञ्जना, सा अभिधा आश्रयो यस्या इति अभिधाश्रया अभिधामूलेत्यर्थः ।

(१२) संयोग इति । संयोगः संसर्गः, विप्रयोगः विरहः, साहचर्य्यं सङ्गः, विरोधिता वैरम् अन्यद् व्याख्यातम् । एते शब्दार्थस्य अनवच्छेदे अनिर्द्धारणे विशेषस्मृतिहेतवः विशेषार्थबोधकारणानीत्यर्थः ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

कस्य शब्दस्य सन्निधिः समभिव्याहारः यथा,—'स्थलार-विन्दश्रियम्' इत्यत्र अरविन्दसन्निधानेन श्रीः शोभा। सामर्थ्यं शक्तिः यथा,—'मधुना मत्तः कोकिलः' इति मधुर्वसन्तः तस्यैव कोकिलमादने सामर्थ्यात्। औचिती युक्तता यथा,—'गौरिका तु मनस्विनः' इत्यत्र औचित्येन गौर्वाक्। "भाति गगने चन्द्रः" इति गगनरूपेण देशेन चन्द्रः शशाङ्कः। 'रात्रौ विभावसुः' इति विभावसुर्वह्निः दिवसे तु सूर्य्यः। व्यक्तिः स्त्रीपुंस्त्वादिकं लिङ्गं यथा,—'मित्रं भाति' इति नपुंसकलिङ्गेन मित्रं बन्धुः, 'मित्रो भाति' इति मित्रः सूर्य्यः। स्वरा उदात्तादयो वेदएव प्रसिद्धाः।

इत्थं संयोगादिभिरेकस्मिन्नर्थे नियमिते अर्थान्तरबोधनप्रतिरोधेन तन्मात्रे एव व्यवस्थापिते यया अर्थान्तरं बोध्यते सा अभिधामूला व्यञ्जना। यथा,—

"कुबेरगुप्तां दिशमुष्णरश्मौ गन्तुं प्रवृत्ते समयं विलङ्घ्य।
दिग्दक्षिणा गन्धवहं मुखेन व्यलीकनिःश्वासमिवोत्ससर्ज"॥

(१३) कुमारस०

---

(१३) कुबेरगुप्तामिति। आकालिकवसन्ताविर्भाववर्णनमिदम्। उष्णरश्मौ सूर्य्ये समयं कालं विलङ्घ्य अकाले इत्यर्थः कुबेरगुप्तां धनपतिरक्षितां दिशमुत्तरामित्यर्थः गन्तुं प्रवृत्ते उद्यते दक्षिणा दिक् मुखेन प्रारम्भेण व्यलीकनिश्वासमिव दुःखनिश्वासमिव व्यलीकन्त्वप्रिया-न्दते इत्यमरः। गन्धवहं वायुम् उत्ससर्ज तत्याज दक्षिणो वायुर्ववाविति भावः। अत्र प्रकरणेन उष्णरश्मिशब्देन सूर्य्यरूपे कुबेरशब्देन धनपतिरूपे दक्षिणाशब्देन तदाख्यदिग्रूपे मुखशब्देन प्रारम्भरूपे

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"आच्छादितायतदिगन्तरमुच्चकैर्गा-
माक्रम्य संस्थितमुदग्रविशालशृङ्गम्।
मूर्ध्नि स्खलत्तुहिनदीधितिकोटिमेन-
मुद्वीक्ष्य को भुवि न विस्मयते नगेशम्"॥ (१४)

शिशुपालवधम्।

प्रथमे दक्षिणाशब्दस्य प्रकरणवशात् तदभिधानदिग्-रूपेऽर्थे नियमिते व्यञ्जनया दाक्षिण्यशीलनायिकारूपोऽर्थः, द्वितीये च नगेशशब्दस्य प्रकरणेन रैवतकपर्वतरूपेऽर्थे नियमिते व्यञ्जनया शिवरूपोऽर्थो बोध्यते।

---

अर्थे नियमिते व्यञ्जनया उग्ररसौ साहसिके पुरुषे कुवेरेण कुत्सित-शरीरेण केनचित् पुरुषेण गुप्तां रक्षितां कामिनीमिति शेषः गन्तुं प्रवृत्ते सति तदीया दक्षिणा दाक्षिण्यवती सुचरित्रेति भावः कामिनी मुखेन वदनेन दुःखनिश्वासं त्यजतीति व्यङ्ग्यार्थोऽभिहित इति द्रष्टव्यम्।

(१४) आच्छादितेति। को जनः आच्छादितं व्याप्तम् आयतं दीर्घं दिगन्तरं दिग्भागो येन तथोक्तम् उच्चकैः उन्नतं गां पृथिवी-माक्रम्य अवष्टभ्य संस्थितं वर्त्तमानम् उदग्राणि उन्नतानि विशालानि महान्ति शृङ्गाणि यस्य तादृशं मूर्ध्नि शिरसि शिखरे इत्यर्थः स्खलन् संलगन् तुहिनदीधितेः चन्द्रस्य कोटिर्यस्य तथाविधम् अत्युन्नतत्वादिति भावः एनं नगेशं पर्वतराजम् उद्वीक्ष्य न विस्मयते न चित्रीयते सर्व एव विस्मयं गच्छतीत्यर्थः। अत्र प्रकरणेन गोशब्देन पृथिवीरूपे, शृङ्गशब्देन शिखररूपे मूर्द्धशब्देन शिखररूपे नगेशशब्देन पर्वतरूपे अर्थे नियमिते व्यञ्जनया उदग्रविशालशृङ्गं गां वृषम् आक्रम्य का-स्थाय संस्थितं मूर्ध्नि शिरसि विराजितचन्द्रकलं नगेशं गिरीशम् उद्-वीक्ष्य दृष्ट्वा को जनः न विस्मयते इति व्यङ्ग्यार्थोऽभिहित इति बोध्यम्।



CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

लक्षणामूलामाह विश्वनाथः,--

"लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम्।
यया प्रत्याय्यते सा स्याद् व्यञ्जना लक्षणाश्रया"॥ (१५)

उपास्यते आश्रीयते विधीयते इति यावत्, प्रत्याय्यते बोध्यते। यथा 'गङ्गायां घोषः' इत्यत्र प्रवाहविशेषरूपार्थं-बोधनादभिधायां, तटरूपार्थंबोधनाल्लक्षणायाञ्च विरतायां यया शीतत्वपावनत्वातिशयरूपं प्रयोजनम् बोध्यते सा लक्षणामूला व्यञ्जना।

आर्थीं व्यञ्जनामाह,--

"वक्तृबोद्धव्यवाक्यानां काकोश्चेष्टादिकस्य च।
वैशिष्ट्यादन्यमर्थं या बोधयेत् सार्थसम्भवा" ॥(१६)

विश्वनाथः।

सा अर्थसम्भवा आर्थी, व्यञ्जनेतिशेषः। यं पुरुषं बोधयितुं शब्द उच्चार्य्यते स बोद्धव्यः, काकुर्ध्वनेर्विकारः, वैशिष्ट्यात् विशेषयोगात्।

---

(१५) लक्षणेति। यस्य प्रयोजनस्य कृते बोधनिमित्तं लक्षणा उपास्यते अङ्गीक्रियते तत्तु प्रयोजनं यया प्रत्याय्यते बोध्यते, सा लक्षणाश्रया लक्षणामूला व्यञ्जना स्यात्।

(१६) वक्तृबोद्धव्येति। वक्ता च बोद्धव्यश्च वाक्यञ्च तेषां काकोः ध्वनिविकारविशेषस्य काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेरित्यमरः। चेष्टादिकस्य च वैशिष्ट्यात् विशेषयोगात् या अन्यमर्थं बोधयेत् सा अर्थसम्भवा आर्थी व्यञ्जनेति शेषः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

यथा 'गतोऽस्तमर्कः' इति वाक्येन आस्तिके द्विजातौ वक्तरि प्रतिपाद्ये वा 'सन्ध्यावन्दनस्यायमवसर' इति, गोपालवालके वक्तरि प्रतिपाद्ये वा "संक्रियन्तां गावो गृहं प्रतिनिवर्त्तामहे" इत्यादिका अर्था वक्त्रादिवैशिष्ट्यात् प्रतीयन्ते। यथा वा,

"तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्द्धं सुचिरमुषितं वल्कलधरैः।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु" ॥(१७)

वेणीसं०।

अत्र मयि न योग्यः खेदः कुरुषु तु योग्य इति काक्वा प्रकाश्यते।

इति शब्दार्थनिरूपणं नाम द्वितीयशिखा।

---

(१७) तथाभूतामिति। नृपसदसि राजसभायां तथाभूतां केशाम्बरयोराकृष्टामिति भावः पाञ्चालतनयां द्रौपदीं वने व्याधैः सार्द्धं वल्कलधरैः सद्भिः सुचिरं दीर्घकालमुषितं स्थितं तथा विराटस्य आवासे सदने अनुचितः य आरम्भः कर्म सूपकारत्वादिकमिति भावः तत्र निभृतं समासक्तं यथा तथा स्थितं दृष्ट्वा गुरुः आर्य्यः युधिष्ठिर इति यावत् खिन्ने सुदुःखिते क्षुभिते इति यावत् मयि खेदं क्षोभं भजति अद्यापि कुरुषु धार्त्तराष्ट्रेष्विति यावत् न खेदं भजतीत्यर्थः। कुरवस्तादृशनिकारकारिणोऽपि न राज्ञः खेदं जनयन्ति, निकारक्षुभितं मां दृष्ट्वा खेदं करोति राजा इत्यहो महच्चित्रमिति काक्वा व्यज्यते इति बोध्यम्।

इति द्वितीयशिखा।

---

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

## तृतीयशिखा।

ध्वन्यादिभेदेन काव्यस्य भेदत्रयमाह,--

काव्यं ध्वनिर्गुणीभूतव्यङ्ग्यं चित्रमिति त्रिधा। (१)

ध्वनिं लक्षयति विश्वनाथः,—

"वाच्यातिशयिनि व्यङ्ग्ये ध्वनिस्तत् काव्यमुत्तमम्"।

यस्मिन् काव्ये व्यङ्ग्यार्थो वाच्यार्थादधिकचमत्कारी तन्नाम ध्वनिः, तच्च उत्तमं काव्यम्।

"भेदौ ध्वनेरपि द्वावुदीरितौ लक्षणाभिधामूलौ।
अविवक्षितवाच्योऽन्यो विवक्षितान्यपरवाच्यश्च"॥

विश्वनाथः। (२)

लक्षणामूलः अभिधामूलश्चेति ध्वनेर्द्वौ भेदौ, तौ च क्रमेण अविवक्षितवाच्यः विवक्षितान्यपरवाच्यश्चेति नामभ्यामपि व्यपदिश्येते। तत्र अविवक्षितं बाधितस्वरूपं वाच्यं यत्र स अविवक्षितवाच्यो नाम लक्षणामूलो ध्वनिः,

---

(१) काव्यमिति। ध्वन्यते अस्मिन्निति ध्वनिः। अन्यत् स्पष्टम्।

(२) भेदाविति। ध्वनेरपि लक्षणाभिधामूलौ द्वौ भेदौ उदीरितौ कथितौ, तत्र लक्षणामूलो नाम अविवक्षितवाच्यः, अभिधामूलो विवक्षितान्यपरवाच्यः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

लक्षणामूलत्वादेवात्र वाच्यमविवक्षितम्। स च द्विविधः अर्थान्तरसंक्रमितवाच्यः, अत्यन्ततिरस्कृतवाच्यश्च।

यदाह विश्वनाथः,—

**अर्थान्तरं संक्रमिते वाच्येऽत्यन्तं तिरस्कृते।**
**अविवक्षितवाच्योऽपि ध्वनिर्द्वैविध्यमृच्छति"॥(३)**

यत्र स्वयमनुपयुज्यमानो मुख्योऽर्थः स्वविशेषरूपे अर्थान्तरे परिणमति तत्र मुख्यार्थस्य स्वविशेषरूपेऽर्थान्तरे संक्रमितत्वादर्थान्तरसंक्रमितवाच्यत्वम्। यथा,—

"त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति।
आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत्"॥(४)

अत्र वचनादि उपदेशादिरूपतया परिणमति, सम्बोध्ये आत्मीयभावाद्यतिशयश्च व्यङ्ग्यः।

यत्र पुनः स्वार्थं सर्वथा परित्यजन्नर्थान्तरं बोधयति

---

(३) अर्थान्तरमिति। अविवक्षितवाच्यो ध्वनिः वाच्ये अर्थान्तरम् अर्थविशेषं संक्रमिते प्रविष्टे अथवा अत्यन्तं तिरस्कृते अपह्नुते इत्यर्थः सति द्वैविध्यं द्वौ भेदौ ऋच्छति प्राप्नोति तथाच अर्थान्तरसंक्रमितवाच्यः अत्यन्ततिरस्कृतवाच्य इति फलितम्।

(४) त्वामिति। अस्मीति अव्ययम् अहमित्यर्थः त्वां वच्मि, अत्र विदुषां पण्डितानां समवायः समूहः तिष्ठति, तत् तस्मात् आत्मीयाम् आत्मने हितां मतिमादाय अत्र स्थितिं विधेहि कुरु। अत्र विधेहीति कथनेनैव वच्मीत्यस्य निरर्थकत्वे मुख्यार्थबाधात् लक्षणया वचनस्य उपदेशरूपतया परिणाम इत्यतः वचनस्य व्यापकस्य उपदेशरूपविशेषार्थे संक्रमणमिति अर्थान्तरसंक्रमितवाच्यत्वमिति बोध्यम्।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

तत्र मुख्यार्थस्यात्यन्ततिरस्कृतत्वादत्यन्ततिरस्कृतवाच्यत्वम् । यथा 'उपकृतं बहु तत्र' इत्यादौ (८पृ०) पूर्वमुक्तं । अत्राद्ये मुख्यार्थस्यार्थान्तरे संक्रमणं प्रवेशः नतु तिरोभावः, अत-एवात्र अजहत्स्वार्था लक्षणा । द्वितीये स्वार्थस्यात्यन्त-तिरस्कृतत्वाज्जहत्स्वार्था ।

"विवक्षितञ्चान्यपरं वाच्यं यत्रापरस्तु सः" ।(५)

मम्मटः ।

यत्र वाच्यं विवक्षितं प्रकाशितस्वरूपं सदन्यपरं व्यङ्ग्यनिष्ठं सोऽपरः विवक्षितान्यपरवाच्यो ध्वनिः, अत्र हि वाच्योऽर्थः स्वरूपं प्रकाशयन्नेव व्यङ्ग्यार्थस्य प्रकाशकः, यथा प्रदीपो घटस्य ।

स च द्विविधः असंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्च ।

यदाह स एव,—

"कोऽप्यलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः"

(६)

---

(५) विवक्षितमिति । यत्र वाच्यं विवक्षितं किन्तु अन्यपरं व्यङ्ग्यार्थबोधप्रवणं स अपरः विवक्षितान्यपरवाच्य इत्यर्थः ।

(६) क इति । अलक्ष्यः अननुभवनीयः क्रमः पौर्वापर्य्यं यस्य तादृशं व्यङ्ग्यं यत्र सः अलक्ष्यक्रमव्यङ्ग्यः । लक्ष्यः क्रमो यस्य तादृशं व्यङ्ग्यं यत्र सः लक्ष्यक्रमव्यङ्ग इति । स चेति स च व्यङ्ग्य इत्यर्थः । विभावादीति विभावादयः विभावानुभावव्यभिचारिणः तेषां प्रतीतिः बोधः कारणं यस्य तत्त्वात् तदुक्तं विभावानुभावव्यभिचारिसंयोगा-द्रसनिष्पत्तिरिति ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

देवप्रयाग ( गढ़वाल-हिमालय )
व्यवस्थापक- प. चक्रधरजोशी



न संलक्ष्यः सम्यगनुभूयमानः क्रमः प्रतीतिक्रमो यस्य तादृशं व्यङ्ग्यं यस्मिन् सोऽसंलक्ष्यक्रमव्यङ्ग्यः । स च रसभावादिः । अत्र व्यङ्ग्यप्रतीतेर्विभावादिप्रतीतिकारणकत्वात् क्रमोऽवश्यमस्त्येव, किन्तु उत्पलपत्रशतव्यतिभेदवल्लाघवान्न संलक्ष्यते ।

अथ कोऽयं नाम रसः के च विभावादय इत्याहुर्मम्मटभट्टपादाः ।

"कारणान्यथ कार्य्याणि सहकारीणि यानि च ।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥
विभावा अनुभावाश्च कथ्यन्ते व्यभिचारिणः ।
व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः"॥ (७)

रत्यादेरित्यादिपदेन हासोत्साहादयो गृह्यन्ते । लौकिके उत्साहादीनां वक्ष्यमाणानां स्थायिभावानां यानि

---

(७) कारणानीति । कारणानि हेतुभूतानि आलम्बनरूपाणि नायकप्रतिनायकादीनि, उद्दीपनानि नायकप्रतिनायकचेष्टादीनि । तैः विभावाद्यैः व्यक्तः स्फुटीकृतः स्फुटतामापादितः । विलक्षणप्रतीतिविषयीकृतः अलौकिकत्वेन बोधित इत्यर्थः । विभाव्यन्ते काव्यनाट्यनिवेशितत्वेन विलक्षणत्वेन भाव्यन्ते प्रतीतिविषयीक्रियन्ते सहृदयैरिति विभावाः, अनु पश्चात् भवन्तीति अनुभावाः विभावत्वं गतानां नायकादीनां धर्मविशेषा इति यावत् । विशेषेण आभिमुख्येन परिपोषकत्वेनेति यावत् चरन्तीति व्यभिचारिणः । तिष्ठतीति स्थायी यावत् सन्दर्भं स्थित इत्यर्थः ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

कारणानि उत्पादकरूपाणि नायकप्रतिनायकादीनि, उद्दीपनरूपाणि नायकप्रतिनायकचेष्टादीनि, यानि कार्य्याणि विपक्षाभिमुखगमनादीनि, यानि च सहकारीणि सहायभूतानि धृतिगर्वादीनि, तानि नाट्ये काव्ये च चेन्निबध्येरन्, क्रमेण विभावाः, अनुभावाः, व्यभिचारिणश्च कथ्यन्ते। तैर्विभावादिभिर्व्यक्तः स्फुटीकृतः विलक्षणप्रतीतिविषयीकृत इति यावत् स्थायी भावः रसः कथितः तद्विशेषानाह,—

आदिमो "हास्यकरुणरौद्रवीरभयानकाः।
वीभत्साद्भुतसंज्ञौ चेत्यष्टौ काव्ये रसाः स्मृताः"॥

मम्मटः।

एषां क्रमेणोदाहरणानि। आदिमस्य,—

"विवृण्वती शैलसुतापि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः।
साचीकृता चारुतरेण तस्थौ मुखेन पर्य्यस्तविलोचनेन"॥ (८)

कुमा०।

---

(८) विवृण्वती इति। शैलसुता पार्वती अपि स्फुरन्ति विकसन्ति यानि बालकदम्बानि अभिनवकदम्बपुष्पाणि तेभ्यः ईषदूनानि तैः कदम्बकुसुमसदृशैरित्यर्थः सञ्जातरोमाञ्चैरिति भावः अङ्गैः अवयवैः भावं रत्याख्यं विवृण्वती प्रकाशयन्ती पर्य्यस्ते परितः क्षिप्ते इतस्ततश्चालिते इत्यर्थः विलोचने नेत्रे यस्य तादृशेन अत एव चारुतरेण अतिमनोहरेण मुखेन साचीकृता वक्रीकृता लज्जया विवृतमुखीति भावः तस्थौ स्थिता। अत्र स्थायीभावो रतिः पार्वतीरूपविभावेन तस्याश्च अङ्गानां रोमाञ्चोदयरूपानुभावेन पर्य्यस्त-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

...-विद्यामन्दिर



हास्यस्य,—

"भिक्षो ! मांसनिषेवणं प्रकुरुषे ? किं तेन मद्यं विना-
मद्यञ्चापि तव प्रियं ? प्रियमहो वाराङ्गनाभिः सह।
तासामर्थरुचिः कुतस्तव धनं ? द्यूतेन चौर्य्येण वा
चौर्य्यद्यूतपरिग्रहोऽपि भवतो ? नष्टस्य कान्या गतिः" ॥(९)

करुणस्य,—

अदृष्टदुःखो धर्मात्मा सर्वभूतप्रियंवदः
मयि जाते दशरथात् कथमुञ्छेन वर्त्तयेत् ॥

---

विलोचनत्वादिना लज्जारूपव्यभिचारिभावेन परिपुष्टा आदिरसत्व-मापद्यते इति बोध्यम्।

(९) भिक्षो इति। भिक्षुविषयिणोरुक्तिप्रत्युक्ती। हे भिक्षो ! मांसनिषेवणं मांसभोजनं प्रकुरुषे ? इत्युक्तिः, मद्यं विना तेन मांसेन किम् विना मद्यं मांसभोजनं व्यर्थमित्यर्थः इति प्रत्युक्तिः। मद्यञ्चापि तव प्रियं प्रीतिकरम् ? इत्युक्तिः, अहो वाराङ्गनाभिः वेश्याभिः सह प्रियं मद्यमिति शेषः केवलं मद्यं न मम प्रियं वाराङ्गनामोदसहितं मद्यं मम प्रियमित्यर्थः इति प्रत्युक्तिः। तासां वाराङ्गनानाम् अर्थरुचिः धनलोभः विना धनं ता न प्रसीदन्तीति भावः, तव धनं कुतः ? धनं नास्तीत्यर्थः भिक्षुत्वादिति भाव इत्युक्तिः। द्यूतेन चौर्य्येण वा धनम् उपार्ज्यते मयेति शेष इत्युक्तिः, भवतः तव चौर्य्यद्यूतपरिग्रहोऽपि, चौर्य्यं द्यूतञ्च भवता क्रियते ? इत्युक्तिः नष्टस्य दुर्वृत्तस्य अन्या अपरा गतिः का ? नैवेत्यर्थ इति प्रत्युक्तिः॥ अत्र तथाविधभिक्षुरालम्बनविभावः तस्य च मांसनिषेवणादिकमनुभावः तत्तत्कार्य्यप्रवृत्तिकीर्त्तनेनाक्षिप्ता चपलता व्यभिचारिभावः एतैः परिपुष्टो हासः सहृदयानां हास्यरसत्वमापद्यते इति बोध्यम्।

(१०) अदृष्ट इति। न दृष्टं दुःखं येन सः अदृष्टदुःखः कदाप्य-प्राप्तदुःखः, धर्मात्मा धार्मिकः सर्वभूतप्रियंवदः सर्वजनरञ्जन इति

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

यस्य भृत्याश्च दासाश्च स्वादून्यन्नानि भुञ्जते ।
कथं स भोक्ष्यते रामो वने मूलफलान्ययम्" ॥(१०) रामा० ।

रौद्रस्य,—

"कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्म्मर्य्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्द्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम्" ॥ (११)

वेणी० ।

---

भावः मयि दशरथात् जातः राम इति शेषः कथं केन प्रकारेण उञ्छेन क्षेत्रपतितैकैकधान्योच्चयनेनेत्यर्थः वर्त्तयेत् वृत्तिं जीविकां कुर्य्यादित्यर्थः यस्य भृत्याः परिजनाः दासाः किङ्कराश्च स्वादूनि अन्नानि भुञ्जते, सोऽयं रामः वने मूलफलानि कथं भोक्ष्यते ? कौशल्याया उक्तिरियम् । अत्र राम आलम्बनविभावः तस्य उञ्छवृत्त्या जीवनादिकमनुभावः कौशल्याया विषादावेगादिकञ्चाचिन्त्यं व्यभिचारिभावः तैः परिपुष्टः सामाजिकानां शोकः करुणरसत्वमापद्यते इति बोध्यम् ।

(११) कृतमिति । अश्वत्थाम्न उक्तिः । यैः निर्म्मर्य्यादैः मर्य्यादा धर्मव्यवस्था तद्रहितैरित्यर्थः उदायुधैः अस्त्रधारिभिः मनुजपशुभिः पशुरूपैर्मनुष्यैर्भवद्भिः इदं गुरुपातकं महापातकम् आचार्य्यहननरूपमिति भावः कृतम् अनुमतं वा दृष्टम् अयम् अहं नरकरिपुणा कृष्णेन सार्द्धं सभीमकिरीटिनां कृष्णभीमार्जुनसहितानामित्यर्थः तेषां भवताम् असृङ्मेदोमांसैः रक्तवसामांसैः दिशां बलिं पूजां बलिः पूजोपहारयोरित्यमरः । करोमि तान् नाशयामीति भावः अत्राचार्य्य आलम्बनविभावः तस्य तथाविधहननादिकमनुभावः अश्वत्थाम्नो गर्वामर्षादिकं व्यभिचारिभावः एतैः परिपुष्टः सामाजिकानां क्रोधः रौद्ररसत्वमायातीति बोध्यम् ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

वीरस्य,—

"क्षुद्राः सन्त्रासमेते विजहतु हरयः क्षुण्णशक्रेभकुम्भा-
युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः।
सौमित्रे! तिष्ठ पात्रं त्वमसि न हि रुषां नन्वहं मेघनादः
किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि" ॥(१२)

महाना०।

भयानकस्य,—

"नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपा-
मन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः।

---

(१२) क्षुद्रा इति। क्षुद्रा एते हरयः कपयः सन्त्रासं विजहतु त्यजन्तु, क्षुण्णौ शक्रस्य इभकुम्भौ ऐरावतकुम्भौ यैः तथाभूताः सायकाः शरा अमीति शेषः युष्मद्देहेषु पतन्तः परम् अत्यर्थं लज्जां दधति धारयन्ति, हे सौमित्रे! तिष्ठ, त्वमपि न हि नैव रुषां क्रोधानां ममेति शेषः पात्रं भाजनं न असि, ननु अहं मेघनादः मेघ इव नदतीति तथोक्तः, किञ्चिद्भ्रूभङ्गलीलया नियमितः बद्धः जलधिर्येन तादृशं रामम् अन्वेषयामि। पुरा यदा महता प्रयासेनापि सेतुर्बद्धुं न शक्तः, तदा किञ्चित् कुपितं रामं वीक्ष्यैव स्वयं समुद्रः समागत्य चरणनिपतितः कोपं सान्त्वयन् स्वयमेवात्मानं बन्धनाय दत्तवानिति कथात्रानुसन्धेया। अत्रालम्बनविभावो रामः तत्कोपविजृम्भितजलधिबन्धनादिकमनुभावः मेघनादस्य गर्वादिकं व्यभिचारिभावः एतैः परिपुष्टः मेघनादोत्साहः सामाजिकानां वीररसत्वं लभते इति बोध्यम्।

(१३) नष्टमिति। अश्वशालाया वानरं निर्गतं दृष्ट्वा वर्षवरादीनामावेगवर्णनमिदम्। वर्षवरैः क्लीबैः मनुष्यगणनाभावात् मनुष्येषु अगण्यत्वादित्यर्थः त्रपां लज्जाम् अपास्य नष्टं पलायितम्। अयं

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

पर्य्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतम्
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः” ॥ (१३)

रत्नावली।

बीभत्सस्य,—

“उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोथभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा।
अन्तःपर्य्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति” ॥ (१४)

मालतीमाधवम्।

---

वामनः खर्व्वपुरुषः त्रासात् कञ्चुकिनः अन्तःपुरचरो वृद्धो विप्रो गुण-गणान्वितः। सर्व्वकार्य्यार्थकुशलः कञ्चुकीत्यभिधीयते इत्युक्तलक्षणस्य पुरुषस्य यः कञ्चुकः वारवाणः कञ्चुको वारवाणोऽस्त्रीत्यमरः। तस्य अन्तः अभ्यन्तरं विशति। पर्य्यन्ताश्रयिभिः नगरप्रान्तवासिभिः किरातैः व्याधैः निजस्य नाम्नः किरातेत्यस्य सदृशं किरं प्रान्तदेशम् अतन्ति गच्छन्तीति व्युत्पत्तिलभ्यार्थानुरूपमित्यर्थः कृतं पर्य्यन्तेषु पलायितमिति भावः। कुब्जा आत्मनः ईक्षणं दर्शनं वानरकर्त्तृक-मिति भावः तस्मात् आशङ्कन्ते इति तथोक्ताः सन्तः नीचतया सङ्कु-चिततयैव शनकैः मन्दं मन्दं यान्ति गच्छन्ति। अत्र वानरनिर्गम आलम्बनविभावः तत् कार्य्यसुलम्फनादिकमनुभावः वर्षवरादीनां त्रासावेगादिकं व्यभिचारिभावः एतैः परिपुष्टा भीतिः सामाजिकानां भयानकरसत्वमायातीति बोध्यम्।

(१४) उत्कृत्येति। प्रेतरङ्कः प्रेताधमः प्रथमं कृत्तिं चर्म उत्कृत्य उत्कृत्य छित्त्वा छित्त्वा अथ अनन्तरं पृथुभिः महद्भिः उच्छोथैः स्फीतताभिः भूयांसि प्रभूतानि, अंसश्च स्फिक् च पृष्ठपिण्डश्च तेषु अव-यवेषु अङ्गेषु सुलभानि सुप्रापानि उग्रपूतीनि अतिदुर्गन्धानि मांसानि

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अद्भुतस्य,—

"मानुषीभ्यः कथं नु स्यादस्य रूपस्य सम्भवः।
न प्रभातरलं ज्योतिरुदेति वसुधातलात्" ॥ (१५) अ०शा०।

एषां क्रमेण स्थायिभावानाह मम्मटः—

"रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्सा विस्मयश्चैव स्थायिभावाः प्रकीर्त्तिताः" ॥

व्यभिचारिभावान् कथयति स एव,—

"निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः।
आलस्यञ्चैव दैन्यञ्च चिन्ता मोहः स्मृतिर्धृतिः ॥
व्रीडा चपलता हर्ष आवेगो जड़ता तथा।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥

---

जग्ध्वा भक्षयित्वा अन्तः अभ्यन्तरे शवस्येति शेषः पर्य्यस्ते पातिते नेत्रे येन तथोक्तः तथा प्रकटिता दशना दन्ता येन तथाविधः सन् अङ्कस्थात् करङ्कात् शवात् अस्थिसंस्थं कङ्कालान्तर्गतं स्फिक्पुटगतमपि अस्थिसन्धिस्थितमपि क्रव्यं मांसम् अव्यग्रं व्यग्रतारहितं शनैःशनैरित्यर्थः अत्ति भक्षयति। अत्र प्रेतरङ्क आलम्बनविभावः तस्य तथाविधमांसभक्षणादिचेष्टादिकमनुभावः, तस्य च हर्षादयो व्यभिचारिभावाः एतैः परिपुष्टा जुगुप्साख्यः स्थायिभावः वीभत्सरसत्वं प्रतिपद्यते इति बोध्यम्।

(१५) मानुषीभ्य इति। पूर्वं व्याख्यातम्। अत्र शकुन्तला आलम्बनविभावः तस्याः तथाविधरूपविलासादिकमनुभावः, औत्सुक्यादयो व्यभिचारिणः, तैः परिपुष्टो विस्मयाख्यः स्थायिभावः सामाजिकानाम् अद्भुतरसत्वमापद्यते इति बोध्यम्।



CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिण: ।
त्रयस्त्रिंशदमी भावा: समाख्यातास्तु नामत: " ।

"निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रस:" ॥

यथा—

"अहौ वा हारे वा कुसुमशयने वा दृषदि वा
मणौ वा लोष्टे वा बलवति रिपौ वा सुहृदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसा:
क्वचित् पुण्ये ऽरण्ये शिव ! शिव ! शिवेति प्रलपत:" ॥ (१६)

---

* विपत्यातेन तत्त्वज्ञानादिना वा स्वावमानना निर्वेद:, परगुणादीनामसहिष्णुता असूया, मद्योपयोगेन चित्तविकाशो मद:, अभीष्टलाभादिना सम्पूर्णस्पृहता धृति:, ग्रहाद्यावेशादिना मन:क्षेप: अपस्मार:, निद्रागतस्य विषयानुभव: सुप्तं, निन्दादिकर्त्तु र्वैरनिर्यातननिश्चय: अमर्ष:, लज्जादिना हेतुना हर्षाद्याकारगोपनम् अवहित्थं, नीतिमार्गानुसरणादिनाऽर्थनिर्द्धारणं मति:, अन्यत् स्पष्टम् ।

---

(१६) अहाविति । अहौ वा सर्पे वा हारे मुक्तादिरचितकण्ठाभरणे वा, कुसुमशयने पुष्पशय्यायां वा, दृषदि पाषाणे वा, मणौ हीरकादिरत्ने वा लोष्टे मृत्पिण्डे वा, बलवति रिपौ शत्रौ वा सुहृदि मित्रे वा, तृणे वा स्त्रैणे स्त्रियां वा स्त्रीशब्दात् स्वार्थे ष्ण-प्रत्यय: । समदृश: तुल्यदृष्टे: मम क्वचित् कुत्रापि पुण्ये पवित्रे

"केचिच्चमत्कारितया वत्सलञ्च रसं विदुः" ॥

विश्वनाथः।

यथा—

"यदाह धात्र्या प्रथमोदितं वचो
ययौ तदीयामवलम्ब्य चाङ्गुलिम्।
अभूच्च नम्रः प्रणिपातशिक्षया
पितुर्मुदं तेन ततान सोऽर्भकः" ॥ (१७) रघु०।

संलक्ष्यक्रमव्यङ्ग्यमाह,—

**यत्र व्यङ्ग्यप्रतीतेस्तु क्रमः सम्यग्विभाव्यते।**
**स संलक्ष्यक्रमव्यङ्ग्यस्तद्भेदा बहवः स्मृताः॥**

यथा पूर्वोदाहृते (१२पृ०) कुबेरगुप्तामित्यादिश्लोके

---

अरण्ये कानने शिव शिव शिवेति प्रलपतः प्रलापं कुर्वतः मम दिवसा यान्तु गच्छन्तु। अत्र तथाविधसमदर्शी पुरुष आलम्बनविभावः तस्य सर्वत्र समदर्शनमनुभावः हर्षप्रबोधादयो व्यभिचारिणः एतैः परिपुष्टो निर्वेदः शान्तरसत्वमायातीति बोध्यम्।

(१७) यदाहेति। सः अर्भकः शिशुः रघुरित्यर्थः धात्र्या उपमात्रा प्रथमोदितं प्रथमतः उक्तं वचः आह अब्रवीत्, तदीयां धात्रीसम्बन्धिनीम् अङ्गुलिम् अवलम्ब्य ययौ च, प्रणिपातशिक्षया प्रणामशिक्षणेन एवं गुरवः प्रणम्या इत्युपदेशेनेत्यर्थः नम्रः नतशिरा इत्यर्थः अभूच्च इति यत् तेन पितुः जनकस्य दिलीपस्य मुदम् आनन्दं ततान विस्तारयामास जनयामासेत्यर्थः। अत्रार्भक आलम्बनविभावः तस्य चेष्टादिकमनुभावः हर्षादयश्च व्यभिचारिणः तैः परिपुष्टः स्नेहाख्यः स्थायिभावः वत्सलरसत्वमापद्यते इति बोध्यम्।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

दक्षिणाशब्देन दाक्षिण्यशीलनायिकारूपं वस्तु व्यज्यते। अयञ्च शब्दशक्त्युद्भवो वस्तुध्वनिः।

गुणीभूतव्यङ्ग्यमाह—

**अनुत्तमे गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु वाच्यतः।**

व्यङ्ग्ये व्यङ्ग्यार्थे वाच्यतो वाच्यार्थादनुत्तमेऽनधिकचमत्कारिणि सति गुणीभूतव्यङ्ग्यं, तच्च मध्यमं काव्यं कथ्यते। यथा,—

"अत्रासीत् फणिपाशबन्धनविधिः, शक्त्या भवद्देवरे
गाढं वक्षसि ताड़िते हनुमता द्रोणाद्रिरत्राहृतः।
दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं प्रापितः
केनाप्यत्र मृगाक्षि! राक्षसपतेः कृत्ता च कण्ठाटवी" ॥(१८)

(बालरामायण नाटकम्)।

अत्र अनुनायकोपनायकप्रतिनायकेषु निर्दिष्टेषु चतुर्थपादे नायको राम एवार्थशक्त्या प्रतीयते, स च केनापीत्युपादानेन वाच्यायमानतयाऽगूढ़ः कृत इति

---

(१८) अत्रेति। सीतां राक्षससङ्कटादुद्धृत्य पुष्पकरथमारूढ़ेन रामेण सीतां प्रत्युक्तमिदम्। हे मृगाक्षि! मृगनयने! अत्र अस्मिन् स्थाने फणिपाशबन्धनविधिः नागपाशास्त्रबन्धनव्यापार आसीत्, अत्र भवद्देवरे भवत्या देवरे लक्ष्मणे शक्त्या तदाख्यास्त्रविशेषेण वक्षसि गाढ़ं ताड़िते प्रहृते रावणेनेति शेषः हनुमता द्रोणाद्रिः गन्धमादनगिरिः आहृतः आनीतः, अत्र दिव्यैः अत्युत्कृष्टैरित्यर्थः लक्ष्मणशरैः इन्द्रजित् लोकान्तरं प्रापितः निहत इत्यर्थः। अत्र केनापि जनेन राक्षसपतेः रावणस्य कण्ठाटवी कण्ठवनं कृत्ता छिन्ना।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

व्यङ्ग्यस्य चमत्कारित्वमपनीतम् । चित्रकाव्यमाह,—

**व्यङ्ग्यार्थहीनं काव्यं यत्तत्तु चित्रमिति स्मृतम् ॥**

चित्रमिति गुणालङ्कारयुक्तं, व्यङ्ग्यार्थहीनं स्फुटप्रतीयमानव्यङ्ग्यार्थैर्रहितम्, तच्च अधमं काव्यमुच्यते ।

**शब्दचित्रं वाच्यचित्रं द्विविधं तत्प्रकीर्त्तितम् ।**

यत्र वाच्यार्थात् शब्दस्य प्राधान्येन चमत्कारित्वं तत् शब्दचित्रम् । यथा,—

"कूजत्कुञ्जकुटीरकौशिकघटाघुत्कारवत्कीचक-
स्तम्बाडम्बरमूकमौकुलिकुलः क्रौञ्चावतोऽयं गिरिः ।
एतस्मिन् प्रचलाकिनां प्रचलतामुद्वेजिताः कूजितै-
रुद्वेल्लन्ति पुराणचन्दनतरुस्कन्धेषु कुम्भीनसाः" ॥ (१९)

(उत्तररामचरितम्)

---

(१९) कूजदिति । कुजन्तीनां रटन्तीनां कुञ्जकुटीरेषु लतादिवेष्टितस्थानरूपचतुरस्रग्टहेषु कौशिकघटानां पेचकसङ्घानां घुत्कारः शब्दविशेषः तद्वन्तः ये कीचकाः वेणुविशेषाः वेणवः कीचकास्ते स्वयं स्वनन्त्यनिलोद्धता इत्यमरः तेषां स्तम्बाडम्बरेषु गुच्छविस्तारेषु मूकानि पेचकभयात् निःशब्दानि मौकुलिकुलानि काकसमूहा यत्र तथाभूतः अयं दृश्यमान इत्यर्थः क्रौञ्चावतः क्रौञ्चाः पक्षिविशेषा अत्र सन्तीति तथोक्तः गिरिः । एतस्मिन् गिरौ प्रचलताम् इतस्ततः सञ्चरतां प्रचलाकिनां मयूराणां कूजितैः ध्वनिविशेषैः उद्वेजिताः उद्वेगं प्रापिताः कुम्भीनसाः क्रूरसर्पाः पुराणानां चन्दनतरूणां स्कन्धेषु उद्वेल्लन्ति निलीयन्ते ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

यत्र शब्दाद्वाच्यार्थस्य प्राधान्येन चमत्कारित्वं तद्वाच्यचित्रम् यथा,—

"ते दृष्टिमात्रपतिता अपि कस्य नात्र
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च।
नीचाः सदैव सविलासमलीकलग्नाः
ये कालतां कुटिलतामिव न त्यजन्ति"। (२०)

इति काव्यप्रभेदनं नाम तृतीयशिखा।

---

(२०) ते इति। ते पक्ष्मलदृशां पक्ष्मले नेत्रलोमशालिन्यौ दृशौ नेत्रे यासां तथाभूतानां सुनयनानामित्यर्थः नारीणाम् अलकाः चूर्णकुन्तलाः खलाः दुर्जनाश्च दृष्टिमात्रपतिता अपि अत्र संसारे कस्य जनस्य क्षोभाय न? अपि तु सर्वस्यैव क्षोभाय मनोविकाराय भवन्तीति शेषः ये अलकाः खलाश्च सदैव नीचा लताः क्षुद्राश्च तथा सविलासं विलाससहितं यथा तथा अलीकलग्नाः भालस्थिताः मिथ्याप्रतारणादिरताश्च सन्तः कालतां कृष्णवर्णतां मलिनताञ्च कुटिलतामिव कौटिल्यमिव भङ्गिवत्त्वमित्यर्थः खलत्वमिव च न त्यजन्ति।

इति तृतीयशिखा।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

# चतुर्थशिखा ।

एवं ध्वनिगुणीभूतव्यङ्ग्यचित्रत्वेन काव्यस्य भेदत्रयमुक्त्वा पुनर्दृश्यश्रव्यत्वभेदेन भेदद्वयमाह,—

**"दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम्" ।**

विश्वनाथः ।

**"दृश्यं तत्राभिनेयं तद्रूपारोपात्तु रूपकम्" ॥**

विश्वनाथः । (१)

अभिनेयम् अभिनययोग्यम्, तच्च दृश्यं काव्यं नटैः रामादिस्वरूपारोपाद्रूपकमिति च कथ्यते ।

अभिनयस्य स्वरूपं भेदाश्च कथ्यन्ते,—

**"भवेदभिनयोऽवस्थानुकारः स चतुर्विधः ।**
**आङ्गिको वाचिकश्चैवमाहार्य्यः सात्विकस्तथा" ॥**

नटैरङ्गेन, वाचा, वस्त्रालङ्कारादिभिः, मानसभावैश्च रामयुधिष्ठिरादीनामवस्थानुकरणमभिनयः ।

दृश्यकाव्यानि कानिचिद्रूपकनाम्नाऽपराणि उपरूपकनाम्ना कथ्यन्ते । तत्र रूपकाणि नाटकप्रकरणप्रहसनप्रभृतीनि दशविधानि, उपरूपकाणि च नाटिका-

---

(१) दृश्यमिति । दृश्यं दर्शनीयं तत्र तयोरित्यर्थः अभिनेयम् अभिनयार्हम् ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

त्रोटकादीनि अष्टादशभेदानि। विशेषं विना सर्वेषामेव स्वरूपं नाटकलक्षणसमानम्।

नाटकलक्षणमाह विश्वनाथः,—

नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम्।
विलासर्द्ध्यादिगुणवद् युक्तं नानाविभूतिभिः॥
सुखदुःखसमुद्भूति नानारसनिरन्तरम्।
पञ्चादिका दशपरास्तत्राङ्काः परिकीर्त्तिताः॥
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान्।
दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको*मतः॥

---

* नायकलक्षणमाह विश्वनाथः—

"त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही।
दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान् नेता"॥

दक्षः क्षिप्रकारी शीलं सद्वृत्तम् एवमादिगुणसम्पन्नो नेता नायको भवति। स च चतुर्विधः, धीरोदात्तः धीरोद्धतः, धीरललितः, धीरप्रशान्तश्च।

तेषां क्रमेण लक्षणमाह स एव,—

"अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः।
स्थेयान्निगूढ़मानो धीरोदात्तो दृढ़व्रतः कथितः"॥

अविकत्थनः अनात्मश्लाघाकरः, महासत्त्वः हर्षशोकादिभिरनभिभूतस्वभावः, निगूढ़मानः विनयच्छन्नगर्वः, दृढ़व्रतः अङ्गीकृतनिर्वाहकः, यथा रामयुधिष्ठिरादिः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

**चत्वारः पञ्च वा मुख्याः कार्य्यव्यापृतपूरुषाः।**
**एक एव भवेदङ्गी" प्रथमो "वीर एव वा॥**

---

"मायापरः प्रगल्भः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः।
आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः"॥
माया कपटाचारः तत्परायणः, यथा भीमसेनादिः।
"निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात्"।
कला: नृत्यादिकाः यथा रत्नावल्यां वत्सराजः,—

---

(२) नाटकमिति। ख्यातं प्रसिद्धं महाभारतादिष्विति शेषः, वृत्तं चरितं यस्य तादृशम्। पञ्चभिः वक्ष्यमाणैः सन्धिभिः मुखादिभिः समन्वितं युक्तम्। विलासः नायकस्य गुणविशेषः। तदुक्तं दर्पणे,

धीरा दृष्टिर्गतिश्चित्रा विलासे सस्मितं वच इति, ऋद्धिः सम्पद् तदादयो गुणाः सन्त्यत्रेति तयोक्तं नानाविभूतिभिः विविधैरैश्वर्य्यैः युक्तम्। सुखञ्च दुःखञ्च तयोः समुद्भूतिः सम्यगुत्पत्तिः यस्मिन् तयोक्तम्। नानारसैः शृङ्गारादिभिर्निरन्तरमविच्छिन्नं नाटकं भवतीति शेषः। तत्र नाटके पञ्चादिका दशपरा अङ्काः तदाख्याः परिच्छेदाः परिकीर्त्तिता उक्ताः। पञ्चाङ्कं षडङ्कं सप्ताङ्कम् अष्टाङ्कं नवाङ्कं दशाङ्कञ्च भवतीत्यर्थः। प्रख्यातः प्रसिद्धो वंशो यस्य तादृशः राजा ऋषिरिवेति राजर्षिः ऋषिवत् सदाचारपरायणः, धीरोदात्तः अविकत्थनत्वादिगुणशालीत्यर्थः प्रतापवान् कोषदण्डजतेजःशालीत्यर्थः स प्रभावः प्रतापश्च यत्तेजः कोषदण्डजमित्यमरः। दिव्यः स्वर्गीयः अथवा दिव्यादिव्यः दिव्यः सन्नदिव्यः, गुणवान् नायकसामान्यगुणशाली नायकः मतः कथितः। चत्वारः पञ्च वा मुख्याः प्रधानानि कार्य्येषु तत्तदभिनयव्यापारेषु व्यापृताः निरताः पुरुषाः भवन्तीति शेषः। प्रथमः आद्यः शृङ्गार इत्यर्थः वा वीरः एक एव उभयोरन्यतर एव अङ्गी प्रधानरसः भवेत् अन्ये सर्वे रसा अङ्गं तत् परि-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अङ्गमन्ये रसाः सर्वे कार्य्यं निर्वहणेऽद्भुतम्*" ।

(२)

---

"सामान्यगुणैर्भूयान् (३) द्विजादिको धीरप्रशान्तः स्यात्" ।
यथा मालतीमाधवे माधवः ।

* प्रकरणादिषु विशेषाः कथ्यन्ते विश्वनाथेन,—
"भवेत् प्रकरणे वृत्तं लौकिकं कविकल्पितम् ।
'आदिमो'ऽङ्गी नायकस्तु विप्रोऽमात्योऽथ वा वणिक् ॥
सापायधर्म्मकामार्थपरो धीरप्रशान्तकः । (४)
नायिका कुलजा क्वापि वेश्या क्वापि द्वयं क्वचित्" ॥ (५)
यथा मृच्छकटिकमालतीमाधवादि ।

---

पोषका इति यावत् । निर्वहणे, चरमे सन्धौ उपसंहारे इत्यर्थः अद्भुतम् आश्चर्य्यं कार्य्यम् ।

(३) सामान्यगुणैरिति । सामान्यगुणैः नायकसामान्यगुणैः त्यागी कृतीत्यत्रोक्तैस्त्यागादिभिः, भूयान् प्रचुरः सामान्यनायकगुणशालीत्यर्थः ।

(४) भवेदिति । प्रकरणे तदाख्ये रूपके कविना कल्पितं रचितं न तु प्रसिद्धमित्यर्थः लौकिकं स्वतः सम्भवीत्यर्थः वृत्तं चरितं भवेत् । आदिमः शृङ्गारः अङ्गी प्रधानं विप्रः, अमात्यः अथवा वणिक् नायकः, स च सापायधर्मकामार्थपरः विनश्वरधर्मकामार्थसाधननिरतः न तु निरपायमोक्षसाधनपर इति भावः तथा धीरप्रशान्तकः धीरप्रशान्त एवेति स्वार्थे कन्प्रत्ययः ।

(५) नायिकेति । क्वापि प्रकरणे नायिका कुलजा कुलीना, क्वापि वेश्या, क्वापि द्वयं कुलीना वेश्या चेत्यर्थः ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

ख्यातं रामायणमहाभारतादिप्रसिद्धं रामयुधिष्ठिरादिचरितम्, सन्धयो वक्ष्यमाणाः, विलासादयो नायकगुणाः तैर्युक्तम्, सुखदुःखसमुद्भवत्वं रामयुधिष्ठिरादिवृत्तान्तेष्वभिव्यक्तम्, नानाविधैरसैर्निरन्तरमविच्छिन्नम्, राजर्षयो दुष्यन्तादयः, दिव्याः श्रीकृष्णादयः, दिव्योऽप्यात्मनि नराभिमानी दिव्यादिव्यः श्रीरामचन्द्रः, निर्वहणे पञ्चमे सन्धौ ।

---

"भवेत् प्रहसने वृत्तं निन्द्यानां कविकल्पितम् ।
अङ्गी हास्यरसो नात्र विष्कम्भकप्रवेशकौ" ॥ (६)

यथा वसन्ततिलक हास्यार्णवकौतुकसर्वस्वादि ।

"नाटिका क्लृप्तवृत्ता स्यात् स्त्रीप्राया चतुरङ्किका ।
प्रख्यातो धीरललितस्तत्र स्यान्नायको नृपः ॥
स्यादन्तःपुरसम्बन्धा सङ्गीतव्यापृताथवा ।
नवानुरागा कन्याऽत्र नायिका नृपवंशजा ॥
सम्प्रवर्तेत नेतास्यां देव्यास्त्रासेन शङ्कितः ।
देवी पुनर्भवेद् ज्येष्ठा प्रगल्भा नृपवंशजा ॥
पदे पदे मानवती तद्वशः सङ्गमो द्वयोः ।
वृत्तिः स्यात् कौशिकी स्वल्पविमर्षाः सन्धयः पुनः" ॥ (७)

---

(६) भवेदिति । प्रहसने तदाख्ये रूपके कविना कल्पितं रचितं निन्द्यानां निन्दनीयानां वृत्तं चरितं भवेत् । अत्र हास्यरसः अङ्गी प्रधानम् । अत्र विष्कम्भकप्रवेशकौ वक्ष्यमाणलक्षणौ न स्त इति शेषः ।

(७) नाटिकेति । क्लृप्तं रचितं वृत्तं यस्याः तथोक्ता, स्त्रीप्राया स्त्रीबहुला, तथा चतुरङ्किका अङ्कचतुष्टयशालिनी स्यात् । अन्तःपुर-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अङ्कलक्षणमाह,—

"प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः।
नानाविधानसंयुक्तो वीजसंहृतिमान्न च॥
युक्तो न बहुभिः कार्य्यैर्नातिप्रचुरपद्यवान्।
आवश्यकानां कार्य्याणामविरोधाद्विनिर्म्मितः॥
नानेकदिननिर्वर्त्त्यकथया संप्रयोजितः।
आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा॥
वधयुद्धविवाहाद्यैर्वर्जितो नातिविस्तरः।
देवीपरिजनादीनां प्रत्यक्षचरितैर्युतः॥

---

विमर्षश्चतुर्थः सन्धिः। यथा रत्नावल्यादिः।
"सप्ताष्टनवपञ्चाङ्कं दिव्यमानुषसंश्रयम्।
त्रोटकं नाम तत् प्राहुः प्रत्यङ्कं सविदूषकम्"॥
यथा विक्रमोर्वशी।

---

सम्बन्धा अन्तःपुरसम्बन्धवती अन्तःपुरस्थितेत्यर्थः। कन्या कुमारी। नेता नायकः। अस्यां कन्यायाम्। देव्या राजमहिष्याः। द्वयोः नायिकानायकयोः। कौशिकी वृत्तिः या सूक्ष्मनेपथ्यविशेषचित्रा स्त्रीसङ्कुला प्रोज्ज्वल नृत्यगीता। कामोपभोगप्रचुरोपचारा सा कौशिकी चारुविलासशीलेत्युक्तलक्षणा। स्वल्पः न्यूनः विमर्षः तदाख्यसन्धिभेदः येषु तादृशाः सन्धयः अन्ये मुखादय इत्यर्थः अत्र भवन्तीति शेषः। अन्यत् सुगमम्।

(८) प्रत्यक्षेति। प्रत्यक्षं प्रत्यक्षवदाभासमानं नेतुर्नायकस्य चरितं यत्र तथाविधः, रसेन भावेन देवादिविषयकरत्यादिना तदुक्तं दर्पणे, सञ्चारिणः प्रधानानि देवादिविषया रतिः। उद्बुद्धमात्रः स्थायी

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्त्तितः" ॥

(८)

भावाः देवादिविषयकरत्यादयः, वीजस्य * संहृतिः सङ्कोचः,—

"तत्र पूर्वं पूर्वरङ्गः सभापूजा ततः परम् ।
कथनं कविसंज्ञादेर्नाटकस्याप्यथामुखम्" ॥

तत्र नाटके, सभापूजा विनीतवचनादिना सभ्यानामाभिमुख्यसम्पादनम् । आमुखं प्रस्तावना ।

---

* स्वल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति ।
फलावसानं यच्चैवं बीजं तदिह कीर्त्तितम्" । भरतः ।

---

च भाव इत्यभिधीयते इति समुच्चयः सम्पोषित इति भावः, नानाविधानैः विविधानुष्ठानैः नानाविधव्यापारैरित्यर्थः संयुक्तः सहितः अलङ्कृत इति यावत् वीजस्य मूलीभूतकारणविशेषस्य संहृतिः संहारः विलोप इत्यर्थः सा अस्यास्तीति तथाभूतः न, वीजसङ्हारवर्जित इत्यर्थः । बहुभिः अतिविस्तृतैरित्यर्थः कार्य्यैः व्यापारैः न युक्तः, नातिप्रचुरपद्यवान् नातिबहुलपद्यसमन्वित इत्यर्थः आवश्यकानाम् अवश्यकर्त्तव्यानां सामयिककार्य्याणाम् अविरोधात् अबाधात् विनिर्मितः रचितः । अनेकदिननिर्वर्त्त्यकथया बहुदिनसमाप्यकथया न सम्प्रयोजितः न कल्पितः । त्रिचतुरैः त्रिभिश्चतुर्भिर्वा पात्रैः नटैर्युतः तथा आसन्नः सम्बद्धः नायको यत्र तादृशः, वधयुद्धविवाहादिरहितः देवीपरिजनादीनां प्रत्यक्षचरितैः प्रत्यक्षवदाभासमानैश्चरितैः युतः । अन्ते शेषे निष्क्रान्तानि निखिलानि पात्राणि यस्य तथोक्तः अङ्क इति कीर्त्तितः कथितः ।



CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

पूर्वरङ्गस्य लक्षणमाह,—

"यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते" ॥ (९)

अस्य नान्दीनामाङ्गस्य स्वरूपमाह भरतः,—

"देवद्विजनृपादीनामाशीर्वादपरायणा ।
नन्दन्ति देवता यस्मात् तस्मान्नान्दीति संज्ञिता"॥ (१०)

सूत्रधारः * नान्दीं प्रयोज्य काव्यार्थसूचकैर्मधुरैर्वचनैः रङ्गस्थान् सभ्यान् प्रसाद्य रूपकस्य कवेश्च आख्यां कवेः गोत्राद्यपि कीर्त्तयेत् । ततः प्रस्तावना । तल्लक्षणमाह भरतः,—

---

* सूत्रम् अभिनयानुष्ठानं धारयति यः सः । इदानीं सूत्रधार एव काव्यस्थापनादिकं सर्वमेव स्थापककार्य्यं प्रयोजयतीति व्यवहारः । स्थापकाभिधानं नटान्तरं न दृश्यते ।

---

(९) यदिति । कुशीलवा नटाः रङ्गविघ्नोपशान्तये नाट्यव्याघात-निवारणाय नाट्यवस्तुनः अभिनयव्यापारस्य पूर्वं यत् देवताध्यानादिकं कुर्वन्ति स पूर्वरङ्गः उच्यते रङ्गात् पूर्वं क्रियमाणत्वादस्य पूर्वरङ्गसंज्ञेति बोध्यम् ।

(१०) देवेति । देवद्विजनृपादीनाम् आशीर्वादः शुभशंसनं परम् अयनम् आश्रयो यस्यास्तादृशी या वाक् नटैः कीर्त्यते इति शेषः यस्मात् देवता नन्दन्ति तुष्यन्ति तयेति शेषः तस्मात् सा नन्दयतीति व्युत्पत्त्या नान्दीति संज्ञिता कीर्त्तिता ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"नटी विदूषको वापि पारिपार्श्विक एव वा।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते॥
चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्म्मिथः।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा"॥
(११)

नटीति स्त्रीत्वमविवक्षितम्, प्रस्तुतस्य आक्षेपिभिर्बोधकैः। तद्भेदाः कथितास्तेनैव,—

"उद्घात्यकं कथोद्घातः प्रयोगातिशयस्तथा।
प्रवृत्तकावलगिते आमुखाङ्गानि पञ्च वै †"॥

एषां क्रमेण लक्षणमाह स एव,—

"पदानि त्वगतार्थानि तदर्थगतये नराः।
योजयन्ति पदैरन्यैस्तदुद्घात्यकमुच्यते"॥ (१२)

---

† दर्पणे उद्घात्यकमिति पुंलिङ्गान्तं प्रवृत्तकेत्यस्य स्थाने प्रवर्त्तकेति च दृश्यते।

---

(११) नटीति। नटी विदूषकः वा पारिपार्श्विकः सूत्रधारसदृशः प्रधाननटविशेषः सूत्रधारस्य पार्श्वचर इत्यर्थः सूत्रधारेण प्रधाननटेन सहिताः सङ्गताः सन्तः चित्रैः मनोहरैः स्वकार्य्यात् उत्थितैः उद्भूतैः प्रस्तुताक्षेपिभिः प्रकृतार्थसूचिभिः वाक्यैः मिथः परस्परं यत्रेत्यव्ययं यदित्यर्थः संलापं कुर्वते समालपन्तीत्यर्थः तत्तु तदेव आमुखं विज्ञेयं सा नाम्ना प्रस्तावनापि विज्ञेयेति शेषः।

(१२) पदानीति। नरा नटा इत्यर्थः अगतार्थानि अबोधिताभिप्रेतार्थानि पदानि तदर्थगतये तस्य अर्थस्य अभिप्रेतस्येत्यर्थः गतये

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अगतः अबोधित इति यावत् अर्थो इङ्गतो यैस्तानि तस्य इङ्गतस्यार्थस्य गतये बोधनाय। यथा मुद्राराक्षसे,—

"सूत्र। क्रूरग्रहः सकेतुश्चन्द्रमसम्पूर्णमण्डलमिदानीमभिभवितु मिच्छति बलात्।

अनन्तरं नेपथ्ये। आः क एष मयि जीवति चन्द्रगुप्तमभिभवितु मिच्छति।

अत्र अन्यार्थवन्त्यपि पदानि इङ्गतार्थबोधनविरहात् पदान्तरैर्योजयित्वा पात्रप्रवेशः।

"सूत्रधारस्य वाक्यं वा यत्र वाक्यार्थमेव वा।
गृहीत्वा प्रविशेत् पात्रं कथोद्घातः स उच्यते"॥

वाक्यमादाय रत्नावल्याम् (१३) वाक्यार्थं गृहीत्वा वेण्याम्। (१४)

---

बोधाय अन्यैः पदैः योजयन्ति सङ्गमयन्ति इति यदिति शेषः तत् उद्घात्यकमुच्यते।

(१३) वाक्यमादाय रत्नावल्यां यथा। द्वीपादन्यस्मादपि मध्यादपि दिशोऽप्यन्तात्। आनीय झटिति घटयति विधिरभिमतमभिमुखीभूय। इति सूत्रधारेण पठिते एवमेतत् कः सन्देहः द्वीपादन्यस्मादपीत्यादि पठित्वा यौगन्धरायणस्य प्रवेशः। इति दर्पणः।

(१४) वाक्यार्थं गृहीत्वा वेण्यां यथा। निर्वाणवैरदहनाः प्रशमादरीणां नन्दन्तु पाण्डुतनयाः सह माधवेन। रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु कुरुराजसुताः सभृत्याः॥ इति सूत्रधारेण पठितस्य वाक्यस्यार्थं गृहीत्वा नेपथ्ये आः दुरात्मन्! वृथा मङ्गलपाठक! कथं स्वस्था भवन्तु मयि जीवति धार्त्तराष्ट्राः। ततः सूत्रधारो निष्क्रान्तः। अथ भीमसेनस्य प्रवेशः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते।
तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा"॥ (१५)

यथा उत्तररामचरिते,—

"सूत्र। तत् किमनेन, एहि राजद्वारमेव स्वजाति-समयेनोपतिष्ठाव इति स्तुतिप्रयोगोद्यते सूत्रधारे, नटेन,—

स्नेहात् सभाजयितुमेत्य दिनान्यमूनि
नीत्वोत्सवेन जनकोऽद्य गतो विदेहान्।
देव्यास्ततो विमनसः परिसान्त्वनाय
धर्म्मासनाद्विशति वासगृहं नरेन्द्रः"॥ (१६)

(उत्तररामचरितम्)

इति रामस्यान्तःपुरप्रवेशरूपं स्तुतिप्रयोगमतिशयानं प्रयोगान्तरं प्रयुञ्जानेन सीतारामयोः प्रवेशः प्रयोजितः।

---

(१५) यदीति। यदि एकस्मिन् प्रयोगे प्रसक्ते अन्यः प्रयोगः प्रसङ्गः प्रयुज्यते उत्थाप्यते, तेन चेत् यदि पात्रस्य नटस्य प्रवेशो भवति तदासौ प्रयोगातिशयः स्यादिति शेषः।

(१६) स्नेहादिति। जनको विदेहः स्नेहात् प्रीत्या सभाजयितुं सम्भाषणादिना जामातॄन् रामभरतादीन् प्रीणयितुम् एत्य अयोध्यायां राजभवनमागत्येत्यर्थः अमूनि एतानि दिनानि उत्सवेनानन्दव्यापारेण नीत्वा यापयित्वा विदेहान् जनपदान् स्वराज्यमित्यर्थः गतः प्रस्थितः ततस्तस्मात् पितृगमनात् इत्यर्थः विमनसः उत्कण्ठितायाः देव्याः सीतायाः परिसान्त्वनाय विनोदनाय नरेन्द्रः रामः धर्मासनात् विचारासनात् स्वीयसिंहासनादित्यर्थः, वासगृहं शयनागारं विशति प्रविशति। राजकार्य्यमपि परित्यज्य देव्याः परिसान्त्वनार्थं स्वयमेव याति।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"कालं प्रवृत्तमाश्रित्य सूत्रभृद् यत्र वर्णयेत्।
तदाश्रयस्य पात्रस्य प्रवेशस्तत्प्रवृत्तकम्"॥ (१७)

सूत्रभृत् सूत्रधारः। यथा,—

"आसादितप्रकटनिर्मलचन्द्रहासः
प्राप्तः शरत्समय एष विशुद्धकान्तः।
उत्खाय गाढ़तमसं घनकालमुग्रं
रामो दशास्यमिव सम्भृतबन्धुजीवः"॥ (१८)

ततो रामस्य प्रवेशः।

---

(१७) कालमिति। प्रवृत्तम् उपस्थितं कालं समयं वसन्तादिकम् आश्रित्य सूत्रभृत् सूत्रधारः यत्र यदित्यर्थः वर्णयेत् तत्तत्कालिकं वस्तु इति शेषः स आश्रयः अवलम्बनं यस्य तादृशः तदवलम्बेनेत्यर्थः यः पात्रस्य प्रवेशः, तत् प्रवृत्तकम्।

(१८) आसादितेति। आसादितः प्राप्तः प्रकटः समुज्ज्वलः निर्मलः चन्द्रस्य हासः विकाशो येन तथोक्तः अन्यत्र आसादितः गृहीतः प्रकटः सुतीक्ष्णः निर्मलः चन्द्रहासोऽसिर्येन तथोक्तः। विशुद्धः मेघाद्यावरणराहित्यात् स्वच्छः अतएव कान्तः रम्यः अन्यत्र विशुद्धः निर्दोषः कान्तः सर्वजनप्रियः। सम्भृतानि समुपचितानि बन्धुजीवानि तदाख्यपुष्पाणि येन तथोक्तः अन्यत्र सम्भृता रचिता बन्धूनां जीवा जीवनोपाया येन तथोक्तः एष शरत्समयः गाढ़तमसं निविड़ान्धकाराच्छन्नम् अन्यत्र सान्द्रतमोगुणाक्रान्तम् उग्रम् भयावहं दशास्यमिव रावणमिव घनकालं वर्षाकालम् अन्यत्र अतिकृष्णवर्णम् उत्खाय उन्मूल्य प्राप्तः उपस्थितः। अत्र शरद्वर्णनमाश्रित्य पात्रस्य रामस्य प्रवेशः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

श्री... (गढवाल...) व्यवस्थापक- प. ...

"यत्रान्यस्मिन् समावेश्य कार्य्यमन्यत् प्रसाध्यते ।
परानुरोधात् तज्ज्ञेयं नाम्नावलगितं बुधैः" ॥ (१९)

समावेश्य सादृश्यमुद्भाव्य, यथा अभिज्ञानशकुन्तले । (२०)

प्रस्तावनान्ते रूपकस्य प्रकृतेतिवृत्तमारभेत ।

"पताकास्थानकं योज्यं सुविचार्य्येह वस्तुनि" ।

इह रूपके, वस्तुनि इतिवृत्ते ।

तल्लक्षणमुक्तं भरतेन,—

"यत्रार्थे चिन्तितेऽन्यस्मिन् तल्लीनोऽन्यः प्रयुज्यते ।
आगन्तुकेन भावेन पताकास्थानकन्तु तत्" ॥

यत्र एकस्मिन् विषये चिन्तिते तत्संसक्तः अपरोऽर्थः अतर्कितेन भावेन बोध्यते तत्पताकास्थानकम् । यथा उत्तरचरिते,—

---

(१९) यत्रेति । यत्र परानुरोधात् परस्य वस्तुनः अनुरोधात् अन्यस्मिन् परस्मिन् तद्वस्तुनीत्यर्थः समावेश्य सादृश्यमुद्भाव्य अन्यत् कार्य्यं प्रसाध्यते सम्पाद्यते, बुधैः विद्वद्भिः तत् नाम्ना अवलगितं ज्ञेयम् ।

(२०) अभिज्ञानशकुन्तले यथा । तवास्मि गीतरागेण हारिणा प्रसभं हृतः । एष राजेव दुष्मन्तः सारङ्गेणातिरंहसा ॥ अत्र दुष्मन्तरूपपात्रप्रवेशानुरोधेन तस्मिन्नेव सादृश्यमुद्भाव्य आत्मनो गीतेन हृतत्वरूपं कार्य्यं निष्पाद्यते इति बोध्यम् ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"रामः । कथं प्रियवचना वचसि प्रसुप्तैव । निर्वर्ण्य
सस्नेहम्,

इयं गेहे लक्ष्मीरियममृतवर्त्तिर्नयनयो-

रसावस्याः स्पर्शो वपुषि बहलश्चन्दनरसः ।

अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः

किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥ (२१)

प्रविश्य प्रतीहारी । देव ! उवत्थिदो । (२२)

रामः । अये कः ।

प्रती । आसन्नपरिचारओ (२३) दुम्मुहो" ।

अत्र दुर्मुखोपस्थितिरूपार्थे चिन्तिते सीताविरह-
रूपार्थः सूचितः ।

---

(२१) इयमिति । इयं सीता गेहे लक्ष्मीः श्रीः, नयनयोः अमृतवर्त्तिः अमृतनाञ्जनतूलिकेत्यर्थः नितरां नेत्रानन्दिनीति यावत् । अस्याः सीतायाः असौ वपुषि शरीरे स्पर्शः बहलः सान्द्रः चन्दनरसः, घनचन्दनरसस्पर्शवत् अस्याः शरीरस्पर्श इति भावः । कण्ठे अर्पित इति शेषः अयं बाहुः अस्या इति शेषः शिशिरश्चासौ मसृणश्चेति तथाविधः शीतलकोमल इत्यर्थः मौक्तिकसरः मुक्ताहार इत्यर्थः अस्याः सीतायाः किं न प्रेयः प्रियतरमित्यर्थः न स्यात् सर्वमेव प्रेय इत्यर्थः तु किन्तु यदि विरहः अस्या इति शेषः परम् अत्यर्थम् असह्यः दुःसहः न स्यादित्यर्थः विरह एवास्या दुःसह इत्यर्थः ।

(२२) उवत्थिदो । उपस्थित इति सं विरह इति शेषः ।

(२३) आसन्नपरिचारओ । आसन्नपरिचारक दुर्मुखः इति सं परिचरति सेवते इति परिचारकः, आसन्नः सदा सन्निहितः स चासौ परिचारकश्चेति तथोक्तः ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

यथा वा वेण्याम्,—

'पर्य्याप्तमेव करभोरु ! ममोरुयुग्मम्' । इति दुर्य्योधनेन कथिते । प्रविश्य सम्भ्रान्तः कञ्चुकी । 'देव ! भग्नं भग्नम्' इत्यनेन वायुना रथकेतनभङ्गरूपार्थे चिन्तिते भीमेन दुर्य्योधनोरुभङ्गरूपार्थः सूचितः ।

यत्तु युद्धवधादिकमन्यच्चानुचितमङ्केष्वदर्शनीयं तत्सर्वमर्थोपक्षेपकै(२४)र्विष्कम्भकादिभिः सूच्येत । आदिपदेन प्रवेशकाङ्कावतारादयो गृह्यन्ते ।

विष्कम्भकस्य लक्षणमाह धनञ्जयः,—

"वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षिप्तार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः*" ॥
(२५)

वृत्तवर्त्तिष्यमाणानाम् अतीतानां भाविनाञ्च, निदर्शकैः सूचकैः, मध्येन मध्यमाभ्यां वा पात्राभ्यां प्रयोजितः । यथा रत्नावल्यां प्रथमाङ्कादौ, अभिज्ञानशकुन्तले च चतुर्थाङ्कादौ ।

* 'आदावङ्कस्य दर्शितः' इति दर्पणे पाठः ।

(२४) अर्थोपक्षेपकैः अर्थसूचकैरित्यर्थः ।

(२५) वृत्तेति । वृत्तानाम् अतीतानां वर्त्तिष्यमाणानां भविष्यतां कथांशानां कथाविभागानां निदर्शकः, सूचकः, संक्षिप्तः संक्षेपेणोक्तोऽर्थः प्रयोजनं यस्मिन् तथोक्तः मध्येन मध्यविधेन नप्रधानेन न नीचेनेति यावत् मध्याभ्यां वा पात्राभ्यां नटाभ्यां प्रयोजितः अभिनीतः विषय इति शेषः विष्कम्भ उच्यते इति शेषः ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः।
अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा" ॥ (२६)

विश्वनाथः।

अनुदात्तोक्त्या प्राकृतवचनेन अङ्कद्वयान्तरिति प्रथमाङ्केऽस्य प्रतिषेधः। यथा वेण्यां तृतीयाङ्कादौ।

"अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः।
यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः" ॥ (२७)

यथा अभिज्ञानशकुन्तले पञ्चमाङ्कान्ते पात्रैः सूचितः षष्ठाङ्कः तदङ्कस्य अङ्गविशेष इवावतीर्णः।

नाटकलक्षणोक्तसन्धिलक्षणमुक्तं दशरूपके,—

अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति"। (२८)

---

(२६) प्रवेशक इति। अनुदात्तोक्त्या प्राकृतवचनेन अङ्कद्वयान्तः अङ्कयोरुभयोर्मध्ये इत्यर्थः नीचपात्रेण प्रयोजितः अभिनीतः कथाविभाग इति शेषः प्रवेशकः विज्ञेयः, शेषं वृत्तवर्त्तिष्यमाणकथांशनिदर्शकत्वादिकं विष्कम्भके यथा विष्कम्भकवत् अत्र योज्यमिति शेषः।

(२७) अङ्कान्ते इति। अङ्कस्य परिच्छेदस्य अन्ते अवसाने पात्रैः नटैः सूचितः प्रकटितः तदङ्कस्य तस्य अङ्कस्य अविभागतः विभागो विच्छेदः स न भवतीति अविभागः तस्मात् अविभक्तभावेनेत्यर्थः यत्रेत्यत्र यं इत्यर्थः अङ्कः अवतरति उत्तिष्ठति, एषः अङ्कावतार इति स्मृतः।

(२८) अन्तरेति। एकान्वये एकप्रयोजने सति अन्तरा मध्ये एकेन अपरेणेत्यर्थः अर्थेन प्रयोजनेन सम्बन्धः संयोगः सन्धिः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

एकेन प्रयोजनेनान्वितानां कथांशानामवान्तरैक-प्रयोजनसम्बन्धः सन्धिः ।

तद्भेदानाह विश्वनाथः,—

"मुखं प्रतिमुखं गर्भो विमर्ष उपसंहृतिः"* ।

---

* "यत्र वीजसमुत्पत्तिस्तन्मुखं परिकीर्त्तितम्" । (२९)

विश्वनाथः ।

यथा अभिज्ञानशकुन्तले प्रथमाङ्के दुष्मन्तशकुन्तलयोः परस्परानुरागरूपस्य वीजस्य उत्पत्तिः ।

"लक्ष्यालक्ष्य इवोद्भेदस्तस्य प्रतिमुखं भवेत्" । (३०)

दशरूपकम् ।

तस्य वीजस्य, यथा तत्रैव द्वितीयेऽङ्के दुष्मन्तानुरागस्य नातिपरिस्फुटप्रकाशः ।

---

(२९) यत्रेति । यत्र सन्धौ वीजस्य ।

स्वल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति ।

फलावसानं यच्चैवं वीजं तदिह कीर्त्तितम् ।

इत्युक्तलक्षणस्य समुत्पत्तिः समुद्भवः, तत् मुखं तदाख्यसन्धिरित्यर्थः परिकीर्त्तितम् । यथा अभिज्ञानशकुन्तले मृगयारूपप्रयोजनसम्बद्धस्य राज्ञः वनमार्गे शकुन्तलारूपदर्शनेन तदनुरागरूपप्रयोजनान्तरसम्बन्धः ।

(३०) लक्ष्यालक्ष्येति । तस्य मुखस्य सन्धेः लक्ष्यालक्ष्य इव कियतांशेन लक्ष्यः अनुमेयः कियता वा अलक्ष्यः अननुमेय इत्यर्थः उद्भेदः उदयः प्रकाश इति यावत् प्रतिमुखं भवेत् ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"फलप्रधानोपायस्य प्रागुद्भिन्नस्य किञ्चन।
गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान् मुहुः"॥ (३१)

विश्वनाथः।

यथा तत्रैव तृतीयेऽङ्के उभयानुरागस्य सम्यक् प्रकाशः मुहुरन्वेषणं शकुन्तलाप्रस्थानादिना ह्रासश्च।

"यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः।
शापाद्यैः सान्तरायश्च स विमर्ष इति स्मृतः"॥ (३२)

दर्पणः।

यथा तत्रैव चतुर्थेऽङ्के उत्कर्षं प्राप्तोऽनुरागो दुर्वाससः शापेन विघ्नितः।

"बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम्।
ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत्"॥ (३३)

दशरूपकम्।

---

(३१) फलेति। फलस्य प्रतिपादयिषितस्य वस्तुनः यः प्रधानोपायः तस्य किञ्चन कथञ्चनेत्यर्थः प्रागुद्भिन्नस्य पूर्वमुद्भूतस्य मुखसन्धेरिति शेषः यत्र य इत्यर्थः मुहुः पुनःपुनः ह्रासान्वेषणवान् समुद्भेदः सम्यक् स्फुरणं स गर्भः।

(३२) यत्रेति। यत्र मुख्यस्य प्रधानस्य फलस्य उपायः गर्भतः गर्भसन्धेः अधिकः अतिरिक्तः उद्भिन्नः प्रकटतां गतः, शापाद्यैः विघ्नविशेषैरिति भावः सान्तरायः सव्याघातः, स विमर्ष इति स्मृतः।

(३३) बीजवन्त इति। बीजवन्तः मुखाद्यर्थाः मुखप्रतिमुखगर्भविमर्षा इत्यर्थः यथायथं यथानुरूपं विप्रकीर्णाः विक्षिप्ताः प्रयुक्ता इत्यर्थः यत्र ऐकार्थ्यम् एकप्रयोजनवत्त्वम् उपनीयन्ते प्राप्यन्ते तत् हि निश्चितं निर्वहणम् उपसंहृतिरित्यर्थः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अथ नाट्योक्तय:,—

"सर्वश्राव्यं प्रकाशं स्यादश्राव्यं स्वगतं मतम् ।
रहस्यं कथ्यतेऽन्यस्य परावृत्यापवारितम् * ॥
त्रिपताककरेणान्यानपवार्य्याऽन्तरा कथाम् ।
अन्योन्यामन्त्रणं यत् स्याज्जनान्ते तज्जनान्तिकम् † ॥
किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत् ।
श्रुत्वेवानुक्तमप्येकस्तत् स्यादाकाशभाषितम्" ॥

दशरूपकम् ।

---

यथा तत्रैव सप्तमाङ्के शकुन्तलादुष्मन्तयोर्मेलनरूपतया सर्वकार्य्याणामवसानम् । उपसंहृतेरेव नामान्तरं निर्वहणम् ।

* परावृत्य अन्यस्य रहस्यकथनमपवारितम् ।

† यस्य न श्राव्यं तस्यान्तरे जर्द्धसर्वाङ्गुलं वक्रानामिकं त्रिपताकलक्षणं करं कृत्वाऽन्येन सह यन्मन्त्र्यते तज्जनान्तिकम् ।

---

(२४) सर्वश्राव्यमिति । सर्वेषां श्राव्यं श्रवणार्हं प्रकाशं स्यात् । अश्राव्यं स्वगतं मतम् । अन्यस्य परावृत्य यत् रहस्यं गोप्यं कथ्यते तत् अपवारितम् । तिस्रः पताकाः यस्य तादृशेन करेण करस्याङ्गुलित्रयेणेत्यर्थः अन्यान् अपवार्य्य आच्छाद्य कथामन्तरा कथामध्ये जनान्ते जनसमीपे यत् अन्योन्यामन्त्रणं परस्परकथोपकथनं तत् जनान्तिकम् । पात्रं सम्बोध्यजनं विना किं ब्रवीषि एवं इत्यादि, अनुक्तमपि श्रुत्वेव एकः यद् ब्रवीति, तत् आकाशभाषितं स्यात् । गमेः गमधातोः स्थाने प्रायेण णयन्तकः साधिः साधधातुः प्रयुज्यते ।



CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"प्रायेण ण्यन्तकः साधिगमे स्थाने प्रयुज्यते ।
राजा स्वामीति देवेति भृत्यैर्भट्टेति चाधमैः ॥
राजर्षिभिर्वयस्येति तथा विदूषकेण च ।
राजन्नित्यृषिभिर्वाच्यः सोऽपत्यप्रत्ययेन च ॥
स्वेच्छया नामभिर्विप्रो विप्र आर्य्येति चेतरैः ।
वयस्येत्यथवा नाम्ना वाच्यो राज्ञा विदूषकः ॥
वाच्यौ नटीसूत्रधारावार्य्यनाम्ना परस्परम् ।
सूत्रधारं वदेद्भाव इति वै पारिपार्श्विकः ।
(तं) सूत्रधारो मारिषेति हण्डे इत्यधमैः समाः ।
वयस्येत्युत्तमैर्हंहो मध्यैरार्य्येति चाग्रजः ॥
भगवन्निति वक्तव्याः सर्वैर्देवर्षिलिङ्गिनः ।
वदेद्राज्ञीञ्च चेटीञ्च भवतीति विदूषकः ॥

---

राजा भृत्यैः स्वामीति देव इति, अधमैः नीचैः भट्टेति, राजर्षिभिः विदूषकेण च वयस्य इति ऋषिभिः राजन्निति अपत्यप्रत्ययेन ष्णादि-प्रत्यययोगेन दाशरथेत्यादिनेत्यर्थः वाच्यः वक्तव्यः सम्बोध्य इत्यर्थः । विप्रः द्विजः स्वेच्छया यथाकामं नामभिर्वाच्य इत्यन्वयः । इतरैः अन्यैः विप्रभिन्नैरित्यर्थः विप्र आर्य्येति वाच्य इति शेषः । विदूषकः कुसुमवसन्ताद्यभिधः कर्म्मवपुर्वेशभाषाद्यैर्हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्म्मज्ञ इत्युक्तलक्षणो नर्म्मसचिवः राज्ञा वयस्य इति अथवा नाम्ना वसन्तक इत्यादि रूपेणेत्यर्थः वाच्यः । नटीसूत्रधारौ परस्परम् आर्य्यनाम्ना वाच्यौ नट्या सूत्रधारः आर्य्येति सूत्रधारेण नटी आर्य्ये इति सम्बोध्येत्यर्थः । पारिपार्श्विकः सूत्रधारस्य पार्श्वचरो नटः सूत्रधारं भाव इति वदेत् । सूत्रधारः तं पारिपार्श्विकं मारिषेति वदेत् भावमारिषशब्दौ यथाक्रमं महाशय भद्रार्थकौ नाटके प्रयुज्येते

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

आयुष्मन् रथिनं सूतो वृद्धं तातेति चेतरः ।
वत्स पुत्रक तातेति नाम्ना गोत्रेण वा सुतः ॥
शिष्योऽनुजश्च वक्तव्योऽमात्य आर्य्येति चाधमैः ।
विप्रैरयममात्येति सचिवेति च भण्यते ॥
उपाध्यायेति चाचार्य्यः कुमारो भर्त्तृदारकः ।
सौम्यभद्रमुखेत्येवमधमैस्तु कुमारकः ॥
वाच्या प्रकृतिभीराज्ञः कुमारी भर्त्तृदारिका" । दर्पणः ।
"हण्डे हञ्जे हलाह्वानं नीचं चेटीं सखीं प्रति" ॥ (३४)

अमरः ।

---

इति बोध्यम् । अधमैः नीचैः समाः तुल्या जनाः हण्डे इति वाच्या इति शेषः । उत्तमैः समाः वयस्येति तथा मध्यैः समाः हंहो इति वाच्या इत्यन्वयः । अग्रजः ज्येष्ठः आर्य्येति वाच्यः कनिष्ठैरिति शेषः । देवर्षिलिङ्गिनः देवा ऋषयः लिङ्गिनः सन्यासधर्मिप्रभृतयः सर्वैः जनैः भगवन् इति वक्तव्याः । विदूषकः राज्ञीं चेटीं राज्ञीसहचरीमित्यर्थः भवतीति, सूतः सारथिः रथिनम् आयुष्मन् इति इतरः वृद्धभिन्नः युवकादिरित्यर्थः वृद्धं स्थविरं जनं तातेति वदेत् । सुतः पुत्रः शिष्यः छात्रः अनुजः कनीयांश्च वत्स, पुत्रक, इति नाम्ना आख्यया गोत्रेण काश्यप इत्यादि रूपेणेत्यर्थः वक्तव्यः । अमात्यः अधमैः नीचैः आर्य्येति, विप्रैः अमात्येति सचिवेति च भण्यते उच्यते । आचार्य्यः उपनीय वेदाध्यापयिता उपनीय ददद्वेदमाचार्य्यः स उदाहृत इति शास्त्रात् । उपाध्यायेति शिष्यैरिति शेषः वाच्यः । कुमारः भर्त्तृदारक इत्युच्यते । अधमैस्तु कुमारकः सौम्य भद्रमुख इत्येवं वाच्यः । प्रकृतिभिः अमात्यादिभिः राज्ञः कुमारी भर्त्तृदारिका वाच्या । नीचं प्रति हण्डे इति चेटीं प्रति हञ्जे इति सखीं प्रति हलेति आह्वानं सम्बोधनं कार्य्यमिति शेषः ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

श्रव्यकाव्यस्य लक्षणं भेदांश्चाह,—

श्रव्यं श्रोतव्यमात्रं तत् त्रिविधं परिकीर्त्तितम्।
पद्यं गद्यञ्च मिश्रञ्च पद्यं चतुष्पदी मतम्॥
जातिर्वृत्तमिति द्वेधा जातिर्मात्राकृतेन तत्।
वृत्तमक्षरसंख्यातं पद्यैनैकेन मुक्तकम्॥ (३५)
द्वाभ्यान्तु युग्मकं ज्ञेयं त्रिभिः श्लोकैर्विशेषकम्।
कलापकं चतुर्भिः स्यात् तदूर्द्ध्वं कुलकं स्मृतम्॥

पद्यमयस्य महाकाव्यस्य लक्षणमुक्तं काव्यादर्शे,—

"सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम्।
आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्॥
इतिहासकथोद्भूतमितरद्वा सदाश्रयम्।
चतुर्वर्गफलोपेतं चतुरोदात्तनायकम्॥

---

(३५) श्रव्यमिति। श्रोतव्यमात्रं केवलं श्रवणीयं नत्वभिनयार्ह-मिति भावः। पद्यं छन्दसा निबद्धं, गद्यं छन्दोरहितम्। जाति-रिति मात्रा ह्रस्ववर्णः तया कृतं रचितं रचनमित्यर्थः तेन उपलक्षितं पद्यं जातिरित्यर्थः। अक्षरैः संख्यातं परिगणितं पद्यं वृत्तम्। पद्येनेति एकेन पद्येन निबद्धमिति शेषः मुक्तकम् अन्याश्रयराहित्यात् स्वतःसिद्धमिति यावत्।

(३६) सर्गबन्ध इति। सर्गैः तदाख्यपरिच्छेदेन बन्धः बन्धनं रचनमित्यर्थः यस्य तादृशं श्रव्यकाव्यं महाकाव्यं तस्य लक्षणं स्वरूपम् उच्यते। आशीः शुभाशंसनं नमस्क्रिया नमस्कारः वापि अथवा वस्तुनिर्देशः वस्तुनः इतिवृत्तस्य निर्देशः समुल्लेखः तन्मुखं तस्य महा-काव्यस्य मुखं प्रारम्भः। इतिहासकथाभिरुद्भूतम् उत्थितं वा इतरत्

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

नगरार्णवशैलर्त्तुचन्द्रसूर्य्यादिवर्णनैः ।
अलङ्कृतमसंक्षिप्तं रसभावनिरन्तरम् ॥
सर्गैरनतिविस्तीर्णैः अव्यहत्तैः सुसन्धिभिः ।
सर्वत्र भिन्नहत्तान्तैरुपेतं लोकरञ्जकम् ॥
काव्यं कल्पान्तरस्थायि जायते सदलङ्कृति" ॥(३६

यथा रामायणरघुवंशशिशुपालबधनैषधचरितादि ।

"खण्डकाव्यं भवेत् काव्यस्यैकदेशानुसारि च" ।

यथा मेघदूतादि ।

---

अन्यत् कविकल्पितमिति भावः सदाश्रयम् उत्कृष्टाधारम् उत्तमं वस्तु समाश्रित्य निबद्धमित्यर्थः । चतुर्वर्गफलोपेतं धर्मार्थकाममोक्षसाधनमित्यर्थः । चतुरोदात्तनायकं धीरोदात्तादिचतुर्विधनायकयुतम् । नगरेति नगरस्य पुरस्य अर्णवस्य समुद्रस्य, शैलस्य पर्वतस्य, ऋतूनां ग्रीष्मादीनां चन्द्रसूर्य्यादीनाञ्च वर्णनैः अलङ्कृतं शोभितम् । असंक्षिप्तं संक्षेपेण नाभिहितं विस्तीर्णमित्यर्थः । रसभावेति रसाः शृङ्गारादयः, भावाः सञ्चारिणः प्रधानानि देवादिविषया रतिः । उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते इत्युक्तलक्षणाः तैः निरन्तरं निरवकाशं सततसन्निहितमित्यर्थः । सर्गैः तदाख्यपरिच्छेदैः अनतिविस्तीर्णैः नातिविस्तारितैरित्यर्थः । अव्यहत्तैः अवणीयचरितैः । सुसन्धिभिः सुष्टु सन्धयः मुखप्रतिमुखगर्भविमर्षोपसंहृतिरूपाः पूर्वोक्ता यत्र तादृशैः । लोकरञ्जकं लोकानन्दकरम् । कल्पान्तरस्थायि कालत्रयस्थिति । सदलङ्कृति अलङ्काररसहितम् ।

इति चतुर्थशिखा ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

**"वृत्तबन्धोज्झितं गद्यं" तद्भेदास्तु कथादयः।**

यथा कादम्बर्यादि।

**गद्यपद्यमयं मिश्रं चम्पूरित्यभिधीयते।**

पद्यमिश्रत्वञ्चात्र बाहुल्येनेति ज्ञेयम्। ततश्च कादम्बर्यादिषु एकद्वित्रिपद्यसत्त्वेऽपि न तेषां गद्यकाव्यत्वहानिः।

इति दृश्यश्रव्यत्वभेदेन काव्यप्रभेदनं नाम चतुर्थशिखा।

——

## पञ्चमशिखा।

——

दोषस्वरूपमाह,—

**काव्यापकर्षका दोषास्ते पुनः पञ्चधा मताः।**
**पदांशपदवाक्यार्थरसानां दूषणेन हि॥**

ये खलु पदवाक्यरसादिदूषणद्वारेण काव्यस्यापकर्षमुत्पादयन्ति, ते नाम दोषनाम्ना कथ्यन्ते। ते पुनः पद-पदांश-वाक्यार्थरस-दूषणद्वारेण काव्यं दूषयन्तीति प्रथमतः पञ्चविधाः। तत्र,

निरर्थकासमर्थत्वे च्युतसंस्कृतित्वञ्च पदगतान्येव।

निरर्थकत्वम् अर्थहीनत्वं, यथा च, वा, हादीनि वृत्तपूरणमात्रप्रयोजनानि रामायणादिषु बाहुल्येन द्रष्टव्यानि।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

श्रीलक्ष्मीधर-विद्यामन्दिर, देवप्रयाग (...) व्यवस्थापक- प. ...
४४८९
अलंकार १०



असमर्थं तदर्थं पठितमपि तस्य अवाचकम्। यथा, 'कुञ्जं हन्ति कृशोदरी' इत्यत्र हन्तीति * गमनार्थं पठितमपि न तत्र समर्थम्।

च्युतसंस्कारत्वं व्याकरणलक्षणहीनत्वम्, यथा,—

"गाण्डीवी कनकशिलानिभं भुजाभ्या-
माजघ्ने विषमविलोचनस्य वक्षः"। (१) किरातार्जुनीयम्।

'आङो यमहनः' [१।३।२८ पा०] इत्यनुशासनबलादाङ्पूर्वस्य हनः स्वाङ्गकर्मकस्याकर्मकस्य चात्मनेपदं नियमितम्। इह तु तदुल्लङ्घितमिति व्याकरणलक्षणहीनत्वात् च्युतसंस्कारत्वम्।

**दुःश्रवानुचितार्थत्वे ग्राम्यत्वं निहतार्थता।**
**क्लिष्टत्वमप्रतीतत्वं विरुद्धमतिकारिता॥**
**अविमृष्टविधेयांशभावः सन्दिग्धता तथा।**
**परवाक्याश्रिता दोषाः † पदांशेऽप्येषु केचन॥**

---

* पदान्तरसहकारेण तु "पद्धति" इत्यादौ हन्तेर्गमनार्थत्वमस्त्येव।

† एकमात्रस्य पदस्य दुष्टत्वे पददोषः, पदानामेका-

---

(१) गाण्डीवीति। गाण्डीवं तदाख्यं धनुः अस्यास्तीति गाण्डीवी अर्जुनः कपिध्वजस्य गाण्डीवं गाण्डिवं पुंनपुंसकमित्यमरः। भुजाभ्यां बाहुभ्यां विषमाणि विरूपाणि विलोचनानि यस्य तथोक्तस्य त्रिलोचनस्येत्यर्थः कनकशिलानिभं स्वर्णपाषाणसदृशं वक्षः आजघ्ने आहतवान्।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

दुःश्रवत्वं परुषवर्णतया श्रुतिदुःखावहत्वम् * पदगतं यथा,—

बन्धुभिः सादरं नेत्रैः पीयमानेव सा मुहुः
सुताननेन्दुपूर्णाङ्गा कार्त्तार्थ्यं लभतां कदा ॥ (२)

अत्र कार्त्तार्थ्यमिति श्रुतिकटु । वाक्यगतं यथा,—

"सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट पितॄनतार्प्सीत् सममंस्त बन्धून् ।
व्यजेष्ट षड्‌वर्गमरंस्त नीतौ समूलघातं न्यवधीदरींश्च" ॥ (३)

भट्टि० ।

---

धिकानां तथात्वे वाक्यदोषः, पदानां परिवर्त्तनेऽपि दोषस्य तादवस्थ्येऽर्थदोषः इत्याहुः ।

* "वक्तरि क्रोधसंयुक्ते तथा वाच्ये समुद्धते ।
रौद्रादौ तु रसेऽत्यन्तं दुःश्रवत्वं गुणो भवेत्" ॥ विश्वनाथः ।

---

(२) बन्धुभिरिति । बन्धुभिः पित्रादिभिः । सुताननेन्दुपूर्णाङ्गा पुत्रमुखचन्द्रोद्गतिरीतिरीत्सङ्गा । कार्त्तार्थ्यं कृतार्थतां पुत्रप्रसवेन साफल्यमित्यर्थः । अन्यत् सुगमम् ।

(३) स इति । स राजा दशरथः वेदान् अध्यैष्ट अधीतवान् त्रिदशान् तिस्रो दशा बाल्ययौवनप्रौढ़ाख्या अवस्था येषां तान् देवानित्यर्थः त्रिदशा विबुधाः सुरा इत्यमरः । अयष्ट यज्ञेनार्च्चितवान्, पितॄन् अग्निष्वात्तादीन् अतार्प्सीत् श्राद्धतर्पणादिभिः प्रीणितवान्, बन्धून् पितृव्यभ्रात्रादीन् सममंस्त सम्यक् मानितवान्, षण्णां कामादीनां वर्गः तं व्यजेष्ट विशेषेण जितवान् नीतौ नीतिशास्त्रे अरंस्त रतवान् यथानीति राजकार्य्यमद्राक्षीदित्यर्थः । किञ्चेति चार्थः अरीन् शत्रून् समूलघातं मूलघातसहितं यथातथेत्यर्थः न्यवधीत् निहतवांश्च ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

पदांशेऽप्येतत्, यथा,—

"तद्गच्छ सिद्ध्यै कुरु देवकार्य्यम्" इत्यत्र 'द्ध्यै' इति पदांशं दुष्टमाहुः ।

अनुचितार्थत्वं (४) पदगतं यथा,—

"तपस्विभिर्या सुचिरेण लभ्यते
प्रयत्नतः सत्रिभिरिष्यते च या ।
प्रयान्ति तामाशु गतिं यशस्विनो
रणाश्वमेधे पशुतामुपागताः" ॥ (५)

---

क्रमेणोदाहरणम्,—

"यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुमदात् पाण्डवीनांचमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्म्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम्" ॥

(६) वेणी० ।

---

(४) अनुचितार्थत्वम् अयुक्तार्थत्वम् ।

(५) तपस्विभिरिति । तपस्विभिः चान्द्रायणादिव्रतपरायणैः जनैः या गतिः सुचिरेण सुदीर्घकालेन अतिदीर्घकालिकतपोऽनुष्ठानेनेति भावः लभ्यते प्राप्यते, सत्रिभिः याज्ञिकैः जनैः प्रयत्नतः बहुप्रयासेनेत्यर्थः या गतिः इष्यते वाञ्छ्यते च, रणाश्वमेधे संग्रामरूपाश्वमेधयज्ञे पशुताम् उपागताः निहता इति भावः अतएव यशस्विनः कीर्त्तिशालिनो वीरा इति शेषः तां गतिं स्वर्गरूपामिति भावः आशु शीघ्रं प्रयान्ति गच्छन्ति ।

(६) य इति । अश्वत्थाम्न उक्तिरियम् । पाण्डवीनां चमूनां सेनानां मध्ये यो यः स्वभुजगुरुमदात् निजबाहुबलदर्पात् शस्त्रं बि-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अत्र पशुपदं कातर्य्य(७)मभिव्यनक्तीत्यनुचितार्थम्। वाक्यगतन्तूह्यम्।

---

अत्र कुपितो वक्ता। उद्धतं वाच्यं यथा,—

"संवर्त्तप्रकटविवर्त्तसप्तपाथो-
नाथोर्म्मिव्यतिकरविभ्रमप्रचण्डः।
निर्घोषः स्फुरति भृशं परःसहस्र-
व्यावल्गत्प्रबलगतागतास्त्रपाणाम्" ॥ (८) वीर०।

रौद्रादिरसे तूदाहरणानि पूर्व्वमुक्तानि।

---

भर्त्ति धरति, यः यः पाञ्चालगोत्रे द्रुपदवंशे शिशुः बालकः, अधिकवयाः युवा प्रौढ़ः स्थविरो वेत्यर्थः वा किंवा गर्भशय्यां गतः मातृजठरस्थित इत्यर्थः, यो यः तस्य कर्म्मणः मत्पितृवधरूपस्येति भावः साक्षी साक्षात् द्रष्टा दृष्ट्वापि अनिषेद्धेति भावः, तथा यस्य यस्य मयि रणे संग्रामव्यापारे इत्यर्थः चरति तिष्ठति सति प्रतीपः प्रतिकूलः मद्विरोधमाचरिष्यतीति भावः। क्रोधान्धोऽहं तस्य तस्य स्वयं जगताम् अन्तकस्यापि यमस्यापीत्यर्थः अन्तकः संहर्त्ता तान् सर्वान् नाशयिष्यामीत्यर्थः।

(७) कातर्य्यमिति। कातर्य्यं दैन्यं पशवो हि परायत्तत्वात् सततदीना एव, तादृशवीराणान्तु स्वाधीनवृत्तित्वात् पशुत्वकीर्त्तनमतीवायुक्तमिति भावः।

(८) संवर्त्तेति। संवर्त्ते कल्पान्ते प्रकटो विषमः विवर्त्तः परिणामो येषां तादृशाः ये सप्त पाथोनाथाः सागराः तेषाम् ऊर्म्मीणां तरङ्गाणां ये व्यतिकराः सङ्घट्टनानि तेषां यो विभ्रमः विलासः विषमगतिविशेषः तद्वत् प्रचण्डः दारुणः परःसहस्राणां सहस्राधिकानां परःशताद्यास्ते येषां परा संख्या शताधिकेत्यमरः व्यावल्गतां सञ्चरतां प्रबलानां गतानां रणकर्म्मणा निहतानाम् अस्त्र-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

ग्राम्यत्वं *(९) केवलं लोके एव स्थितत्वम्। पदगतं यथा,—

किं रुषा शोणितस्पर्द्धी गल्लस्ते स्पन्दते भृशम्। (१०)

वाक्यगतं यथा,—

"ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः।

करोति खादनं पानं सदैव तु यथा तथा" ॥ (११)

---

* ग्राम्यत्वमधमोक्तिषु गुणः। यथा अभिज्ञानशकुन्तले—

जालु। 'एत्तिके दाव एदस्स आगमे, अध मां मालेध कुट्टेध वा'। (१२) अत्र 'मालेध' 'कुट्टेध' इति पदे ग्राम्ये।

---

तानां रणकर्मणि सक्तानाम् चक्षपाणां राक्षसानां राक्षसः कौणपः क्रव्याद् क्रव्यादोऽस्रप आशर इत्यमरः निर्घोषः सिंहनादः भृशम् अत्यर्थं स्फुरति प्रसरति।

(९) ग्राम्यत्वमिति। काव्येषु अलौकिकचमत्कारिपदप्रयोग एव युक्तः न तु सामान्यजनप्रयोज्यपदप्रयोगः, तथात्वे काव्यस्य चमत्कारित्वं नश्यतीति भावः ग्राम्यः ग्रामीणजनः सामान्यजन इत्यर्थः तस्य भावः ग्राम्यत्वं येन प्रयोगेण ग्राम्यत्वं प्रतीयते तादृशप्रयोगो ग्राम्यः स तु सहृदयानामप्रीतिकर इत्यस्य दोषत्वमिति भावः।

(१०) किमिति। रुषा क्रोधेन शोणितस्पर्द्धी रुधिरनिभः ते तव गल्लः कपोल इत्यर्थः भृशम् अत्यर्थं स्पन्दते स्फुरति। अत्र गल्लशब्दो ग्राम्यः।

(११) ताम्बूलेति। ताम्बूलभृतगल्लः ताम्बूलपूर्णवदन इत्यर्थः अयं मानुषः भल्लं सुष्ठु इत्यर्थः जल्पति कथयति, किञ्चेति त्वर्थः यथा तथा सदैव खादनं भोजनं पानञ्च करोति।

(१२) एत्तिके इति। एतावांस्तावदेतस्यागमः, अथ मां मारयत कुट्टयत वा।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

प्रथमे गल्लशब्दः, द्वितीये गल्लादयश्च शब्दाः, ग्राम्याः।

निहतार्थत्वम् * उभयार्थकस्य शब्दस्य अप्रसिद्धेऽर्थे प्रयोगः। यथा,— "यमुनाशम्बरमम्बरं व्यतानीत्"।

शम्बरशब्दो दैत्यविशेषे प्रसिद्धः, इह तु जले निहतार्थः।

† क्लिष्टत्वमर्थप्रतीतेर्व्यवहितत्वम्। पदगतं यथा,—

'क्षीरोदजावसतिजन्मभुवः प्रसन्नाः'।

अत्र क्षीरोदजा लक्ष्मी स्तस्यावसतिः पद्मं तस्य जन्मभुवो जलानीत्यतिकष्टेन बोधः।

वाक्यगतं यथा,—

"धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः।
रज्यत्यपूर्वबन्धव्युत्पत्ते र्मानसं शोभाम्"॥ (१२)

अत्र धम्मिल्लस्य। (केशबन्धस्य) शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति सम्बन्धः क्लिष्टः।

---

* श्लेषादौ एतन्न दोषः।

† क्लिष्टत्वं विरुद्धमतिकारित्वम् अविमृष्टविधेयांशभावश्च एतानि समासगतान्येव पददोषाः।

---

(१२) धम्मिल्लस्येति। अपूर्वा बन्धे व्युत्पत्तिः ज्ञानं नैपुण्यमित्यर्थः यस्याः तथाभूतायाः कुरङ्गशावाक्ष्याः मृगाक्ष्याः धम्मिल्लस्य संयतकेशकलापस्य धम्मिल्लाः संयताः कचा इत्यमरः। शोभां सौन्दर्यं प्रेक्ष्य कस्य मानसं निकामम् अत्यर्थं न रज्यति? न रक्तं भवति? सर्वस्यैव रज्यतीत्यर्थः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अप्रतीतत्वमेकदेशशास्त्रान्तरमात्रप्रसिद्धत्वम् ‡ । यथा,—

'योगेन दलिताशयः' आशयशब्दो वासनायां योगशास्त्रे एव प्रसिद्धः ।

विरुद्धमतिकारिता यथा,—

"उदारचरितो धीमान् सर्वलोकप्रियङ्करः ।
अकार्य्यमित्रमेकोऽसौ तस्य किं वर्णयामहे" ॥ (१४)

अत्र कार्य्यं विना मित्रमिति विवक्षितम्, अकार्य्येषु मित्रमिति विरुद्धा प्रतीतिः ।

अविमृष्टः प्राधान्येनानिर्द्दिष्टो विधेयांशो यत्र तस्य

---

‡ "गुणः स्यादप्रतीतत्वं ज्ञत्वं चेद्वक्तृवाच्ययोः" ।
विश्वनाथः ।

यथा,—"त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्त्तिनीम् ।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः" ॥ (१५)
कुमारस० ।

अत्र वक्तृवाच्ययोस्तदर्थबोधान्न दोषः ।

---

(१४) उदारेति । असौ एकः उदारं महत् चरितं यस्य तादृशः धीमान् प्राज्ञः सर्वलोकानां प्रियङ्करः प्रियकारी अकार्य्यमित्रं तस्य किं वर्णयामहे ? न किमपीति भावः ।

(१५) त्वामिति । ब्रह्माणं प्रति देवानां स्तुतिरियम् । हे देव ! त्वां पुरुषार्थप्रवर्त्तिनीं भोगापवर्गसाधयित्रीं प्रकृतिं मूलकारणं तथा त्वामेव तस्याः प्रकृतेः दर्शिनं द्रष्टारम् अध्यक्षरूपेणेति शेषः मयाध्यक्षेण प्रकृतिः सूयते सचराचरमिति अर्जुनं प्रति भगवदुक्तेः । उदासीनम् असंसृष्टं पुरुषम् आत्मानं विदुः जानन्ति बुधा इति शेषः ।

६

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

भावः अविमृष्टविधेयांशभावः, अयं विधेयाविमर्श इति च कथ्यते। यथा,—

"वपुर्विरूपाक्षमलक्ष्यजन्मता
दिगम्बरत्वेन निवेदितं वसु।
वरेषु यद् बालमृगाक्षि! मृग्यते
तदस्ति किं व्यस्तमपि त्रिलोचने" ॥ (१६) कुमारस०।

अत्र अलक्ष्यं विधेयं तस्य च समासे गुणीभावादप्राधान्येन निर्देशः। यथा वा,—

"अमुना भवता नाथ! मुहूर्त्तमपि सा पुरा"।

अत्र नञो विधेयत्वमेवोचितम्, यथा निम्ने श्लोके,—

"नवजलधरः सन्नद्धोऽयं, न दृप्तनिशाचरः?
सुरधनुरिदं दूराकृष्टं, न तस्य शरासनम्? ।

---

(१६) वपुरिति। पार्वतीं प्रति जटिलरूपिणो हरस्योक्तिरियम्। हे बालमृगाक्षि! मृगशावकनयने! वपुः शरीरं शम्भोरिति शेषः विरूपाणि विषमाणि अक्षीणि यस्य तादृशं त्रिनेत्रं कुत्सितमिति भावः, अलक्ष्यं जन्म यस्य तथोक्तः, तस्य भावः अलक्ष्यजन्मता अकुलीनत्वमिति भावः, तथा दिगम्बरत्वेन नग्नत्वेन वसु धनं निवेदितं सूचितं यस्य धनमस्ति स कदापि न नग्नस्तिष्ठति, अस्य तु तदभावाद् दिगम्बरत्वमिति भावः अतः वरेषु उपयन्तृषु यत् रूपादिकमित्यर्थः। तदुक्तम्, कन्या वरयते रूपं माता वित्तं पिता श्रुतम्। बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः॥ इति। मृग्यते अन्विष्यते त्रिलोचने हरे तत् व्यस्तमपि एकमपीत्यर्थः समस्तं दूरापास्तमिति भावः किम् अस्ति? नैवेत्यर्थः।

(१७) नवेति। उर्वशीविरहिणः पुरूरवस उक्तिरियम्। अयं नवजलधरः नूतनमेघः सन्नद्धः समुदितः, दृप्तश्चासौ निशाचरश्चेति स

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अयमपि पटुर्धारासारो, न वाणपरम्परा ?
कनकनिकषस्निग्धा, विद्युत्, प्रिया न ममोर्वशी" ?॥
(१७) (विक्रमो०)

"जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थमसक्तः सुखमन्वभूत्" ॥ (१८)
(रघुवंशम्)

इत्यत्र तु अत्रस्तताद्यनुवादेनात्मगोपनाद्येव विधेय-मिति न दोषः । वाक्यगतो यथा,—

"न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ।
धिक्! धिक्! शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः" ॥ (१९)

---

न, इदं दूराकृष्टं दूरात् आकृष्टं सुरधनुः शक्रकार्मुकं, तस्य निशाचरस्य शरासनं धनुः न, अयमपि पटुः प्रबलः धारासारः वृष्टि-धारापातः, न बाणपरम्परा शरवर्षणधारा, कनकस्य निकषः कषण-रेखा तद्वत् स्निग्धा स्फुरन्ती विद्युत् इयमिति शेषः, मम प्रिया उर्वशी न ।

(१८) जुगोपेति । स राजा दिलीपः अत्रस्तः त्रासरहितः सन् आत्मानं जुगोप ररक्ष अनातुरः अक्लान्तः सन् धर्मं भेजे सिषेवे अगृध्नुः अलोलुपः सन् अर्थं धनं राजस्वरूपमित्यर्थः आददे जग्राह प्रजाभ्य इति शेषः । तथा असक्तः आसक्तिरहितः सन् सुखम् अन्वभूत् बुभुजे ।

(१९) न्यक्कार इति । रावणस्योक्तिरियम् । मे मम अरयः शत्रव इति यत्, अयमेव न्यक्कारः निकारः अवमाननमित्यर्थः तत्रापि अरिष्वपि असौ अरिः राम इति भावः तापसः तपस्वी क्षुद्र इति

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्" इत्युक्तेरुद्देश्यस्य प्रथमं ततो विधेयस्य निर्देशो युक्तः। अत्र, न्यक्कारस्य विधेयत्वे विवक्षितेऽपि प्रथमं निर्देशात् न तथा प्रतीतिः। रचना च पदद्वयस्य विपरीतेति वाक्यदोषः।

यथा वा,—

"आनन्दयति ते नेत्रे योऽसौ सुभ्रु ! समागतः" ॥

अत्र, 'असौ' इत्यस्य विधेयत्वमेव भवितुं युक्तं, तच्च यच्छब्द निकटस्थतया अनुवाद्यत्वप्रतीतिकृत्।

सन्दिग्धत्वं * यथा,—

---

* 'सन्दिग्धत्वं गुणो व्याजस्तुतिपर्य्यवसायि चेत्'।

(विश्वनाथः)

व्याजस्तुतिश्च अलङ्कारप्रस्तावे वक्ष्यमाणा। यथा,—

"पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव !।

विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम्" ॥

---

भावः, सोऽपि तापसोऽपि अत्रैव लङ्कायामेव आगत्येति शेषः राक्षसकुलं निहन्ति नाशयति अहो ! आश्चर्य्यं रावणो जीवति एतावति निकारे रावणस्य जीवन माश्चर्य्यमित्यर्थः। शक्रजितम् इन्द्रजितं धिक् ! धिक् ! निन्दामीत्यर्थ धिक् निर्भर्त्सन निन्दयोरित्यमरः। इन्द्रजयिनापि तापसात् पराजयो लब्ध इति भावः। प्रबोधितवता जागरितेन कुम्भकर्णेन वा किम् ? न किमपि कार्य्यं साधितमित्यर्थः। तथा स्वर्ग एव ग्रामटिका क्षुद्रो ग्रामः तस्या विलुण्ठनेन वृथा उच्छूनाः उद्दृप्ताः तैः एभिः मदीयैरित्यर्थ भुजैः बाहुभिः विंशतिसंख्यकैरिति भावः किम्? न किमपि प्रयोजनमित्यर्थः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"आशीःपरम्परां (२८) वन्द्यां कर्णे कृत्वा कृपां कुरु"।

अत्र, वन्द्यामिति वन्दीभूतायां उत वन्दनीयामिति सन्देहः।

वाक्यमात्रगतान् दोषानाह,—

**वर्णानां प्रतिकूलत्वं सन्धौ विश्लेषकष्टते।**
**अधिकन्यूनकथितपदताऽक्रमता तथा॥**
**भग्नप्रक्रमता ख्यातिहतता सङ्करोऽपि च।**
**गर्भितत्वं तथा काव्ये दोषाः स्युर्वाक्यमात्रगाः॥**

वर्णानां रसानुगुणत्वं वक्ष्यते तद्वैपरीत्यं प्रतिकूलत्वम्। यथा, 'कृतमनुमतम्' (२२पृ०) इत्यादि पूर्वमुक्तम्। अत्र हि गाढ़बन्धत्वं दीर्घसमासत्वञ्च उचितम्। तद्वैपरीत्य-करणात् दोषः।

सन्धौ विश्लेषः द्विविधः, व्याकरणलक्षणानुसारेण कृतः, अनुशासनमुल्लङ्घ्य स्वेच्छया कृतश्च। पूर्वः असकृ-देव दोषः, द्वितीयस्तु सकृदपि। आद्यो यथा,—

"दलिते उत्पले एते अक्षिणी अमलाङ्गि! ते"।

द्वितीयो यथा,—

"वासवाशामुखे भाति इन्दुश्चन्दनविन्दुवत्"।

सन्धौ कष्टता श्रुतिदुःखावहत्वम्। यथा,

---

(२८) आशीःपरम्पराम् आशिषाम् वृन्दम्।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"उर्व्यं सावत्र तर्वाली मर्वन्ते चार्ववस्थितिः।
नातस्तु युज्यते गन्तुं शिरो नमय तन्मनाक्" ॥ (२१)

अधिकपदता * यथा—

"सदाशिवं नौमि पिनाकपाणिम्" इत्यत्र 'पिनाकपाणिम्' इति विशेषणमधिकम्।

---

*'गुणः क्वाप्यधिकं पदम्' यथा,—

"आचरति दुर्जनो यत् सहसा मनसोऽप्यगोचरानर्थान्।
तत्र न जाने जाने स्पृशति मनः किन्तु नैव निष्ठुरताम्" ॥ (२२)

अत्र न न जाने इत्ययोगव्यवच्छेदकम्, द्वितीयं जाने इति अन्ययोगव्यवच्छेदकम् (२३) इति वैचित्र्यातिशयः।

"सम्भ्रमे विस्मये हर्षे विषादेऽप्यधिकं पदम्"। गुण एव। सम्भ्रमे यथा,—

---

(२१) उर्वसाविति। अत्र मर्वन्ते मरोरन्ते असौ उर्वी महती चार्ववस्थितिः कुण्ठिता तर्वाली तरूणां श्रेणी अत्र ऋजु सरलं यथा तथा गन्तुं न युज्यते न शक्यते इत्यर्थः, तत् तस्मात् मनाक् ईषत् शिरः मस्तकं नमय नतं कुरु॥

(२२) आचरतीति। दुर्जनः सहसा मनसोऽपि अगोचरान् अर्थान् यत् आचरति अनुतिष्ठति तत् न जाने न जाने किन्तु मनः निष्ठुरतां नैव स्पृशति। दुर्जनस्य दौर्जन्यं ज्ञायते परं तस्य अनिष्टं कर्त्तुं नेच्छामीति भावः।

(२३) अयोगव्यवच्छेदकम् अयोगस्य ज्ञानाभावस्येत्यर्थः व्यवच्छेदकं निराकारकं तथाच दुर्जनस्य दौःशील्यं मे ज्ञातमस्तीति भावः,

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"कुर्य्यां हरस्यापि पिनाकपाणेः" इत्यत्र तु अतिदुर्धर्षत्वसूचनाय 'पिनाकपाणेः' इति विशेषणं युक्तमेव।

---

"अर्घ्यमर्घ्यमिति वादिनं नृपं सोऽनवेक्ष्य भरताग्रजो यतः।
क्षत्रकोपदहनार्चिषं ततः सन्दधे दृशमुदग्रतारकाम्" ॥ (२४)

रघुवंशम्।

विस्मये हर्षे च यथा,—

"दृष्ट्वा स्फीतोऽभवदलिरसौ लेख्यपद्मं विशालं
चित्रं! चित्रं! किमिति! किमिति! व्याहरन् निष्पपात।
नास्मिन् गन्धो न च मधुकणो नास्ति तत्सौकुमार्य्यं
घूर्णन् मूर्द्ना बत! नतशिरा व्रीड़या निर्जगाम" ॥ (२५)

---

जाने इति अन्ययोगस्य अपरज्ञानस्य व्यवच्छेदकं तथाच अहमेव जाने नान्य इति अथवा अहं यथा जाने तथा नान्य इति च भावः।

(२४) अर्घ्यमिति। भग्नहरकार्मुकं कृतसीतोद्वाहं पुत्रं रामं गृहीत्वा अयोध्याभिमुखं गच्छतो दशरथस्य परशुरामं सक्रोधमागतं वीक्ष्य ससम्भ्रमोक्तिरियम्। सः परशुरामः अस्य मे अर्घ्यं गृहाणेति शेषः इति वादिनं नृपम् अनवेक्ष्य अगणयित्वा इत्यर्थः यतः यस्यां दिशि भरताग्रजः रामः तिष्ठतीति शेषः ततः तस्यां दिशि क्षत्रकोपदहनार्चिषं क्षत्रियान् प्रति कोपानलशिखाम् उदग्रतारकां भयङ्करतारकां दृशं चक्षुः सन्दधे पातयामास।

(२५) दृष्ट्वेति। असौ अलिर्भ्रमरः विशालं महत् लेख्यपद्मं चित्रितकमलं दृष्ट्वा स्फीतः आनन्दोत्फुल्ल इत्यर्थः अभवत्। चित्रं चित्रम् आश्चर्य्यमाश्चर्य्यं किमिति किमिति व्याहरन् ब्रुवन् निष्पपात तस्मिन् लेख्यपद्मे इति शेषः। अस्मिन् लेख्यपद्मे न गन्धः न च मधुकणः मकरन्दबिन्दुः, न तस्य सौकुमार्य्यं सुकोमलत्वम् अस्ति

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

न्यूनपदता * यथा, "तथाभूतां दृष्ट्वा" इत्यादौ (१५ पृ०) पूर्वमुक्ते।

अत्र, 'अस्माभिः' इति 'खिन्ने' इत्यस्मात् पूर्वम् 'इत्थम्, इति च पदं न्यूनम्।

कथितपदत्वं † यथा,—

"प्रियं चेद्भरतस्यैतद्रामप्रव्राजनं भवेत्।
मास्म मे भरतः कार्षीत् प्रेतकृत्यं कदाचन" ॥ (२६)

(रामायणे)

---

विषादे यथा,——

"रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पङ्कजालम्।
इत्थं विचिन्तयति कोषगते द्विरेफे
हा! हन्त! हन्त! नलिनीं गज उज्जहार" ॥ (२७)

* "उक्तावानन्दमग्नादेः स्यान्न्यूनपदता गुणः"।

† यत्र तत्पदप्रयोग एव न युक्तस्तत्र अधिकपदत्वम्,

---

इति दृष्ट्वेति शेषः यत खेदे मूर्द्धा घूर्णन् व्रीड़या लज्जया नतशिराः अवनतमस्तकः सन् निर्जगाम।

(२६) प्रियमिति। चेत् यदि एतद् रामस्य प्रव्राजनं वनप्रेषणं भरतस्य प्रियं भवेत् तदा भरतः कदाचन मे प्रेतकृत्यं मास्म कार्षीत् न करोतु।

(२७) रात्रिरिति। रात्रिः गमिष्यति प्रभाता भविष्यतीत्यर्थः, सुप्रभातं भविष्यति, भास्वान् सूर्य्यः उदेष्यति उदयास्यति पङ्कजालं कमलसङ्घः हसिष्यति विकसिष्यति, कोषगते कमलकुड्मलस्थिते द्विरेफे भ्रमरे इत्थं विचिन्तयति सति हा हन्त! हन्त,! विषादसूचकमव्ययमेतत्त्रयं गजः नलिनीं उज्जहार उदपाटयत्।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अत्र भरत इति पुनः कथितं, सर्वनाम्नैव अस्य परामर्शो युक्तः,—"मास्म मेऽसौ सुत" इत्यदुष्टम्।

अक्रमत्वं, अविद्यमानः क्रमः पदस्थितिक्रमो यत्र तत् अक्रमम् तस्य भावः। यथा,—

"इयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया पिनाकिनः।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी" ॥ (२८) कुमारस०।

---

यत्र तु पर्य्यायान्तरेण सर्वनाम्ना वा तत्प्रयोगो युक्तस्तत्र कथितपदत्वम्।

विहितस्य अनुवाद्यत्वे कथितपदत्वं गुणः। यथा,—

"उदेति सविता ताम्रस्ताम्रएवास्तमेति च।
सम्पत्तौ च विपत्तौ च महतामेकरूपता" ॥ (२९)

अत्र ताम्रपदस्य कथितपदत्वेऽपि उत्तरवाक्येऽनुवाद्यत्वाददोषः। यथा वा,—

"जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते।
गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि सम्पदः" ॥

---

(२८) इयमिति। पार्वतीं प्रति जटिलरूपिणो हरस्योक्तिरियम्। कलावतः चन्द्रस्य सा प्रसिद्धा कान्तिमती लावण्यपूर्णा कला रेखा अस्य लोकस्य जगतः नेत्रकौमुदी नयनानन्ददायिनीत्यर्थः त्वञ्च एतत् द्वयं सम्प्रति पिनाकिनः शम्भोः समागमप्रार्थनया सङ्गाभिलाषेण शोचनीयतां गतम्।

(२९) उदेतीति। सविता सूर्य्यः ताम्रः रक्तः सन् उदेति उद्गच्छति, ताम्र एव रक्त एव अस्तमेति च अस्तं गच्छति च।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अत्र त्वम् इत्यनन्तरं चकारो युक्तः ।

भग्नप्रक्रमता, भग्नः प्रक्रमः उद्देश्यानुगुणः प्रस्तावो यस्मिन् तद् भग्नप्रक्रमम् तस्य भावः । यथा,—

"यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्त्तितुं वा ।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति लक्ष्मीः" ॥

(२०) (किरातार्जु०)

अत्र सुखलिप्सयेत्यत्र 'सुखमीहितुम् वा' इति तुमन्तप्रयोग एव युक्तः ।

ख्यातिहतता प्रसिद्धित्यागः । मेघादीनां गर्जितादेव प्रसिद्धं तदन्यथावर्णने ख्यातिहतत्वम् ।

वाक्यान्तरपदानां वाक्यान्तरेऽनुप्रवेशः सङ्करः । यथा,—

"किमिति न पश्यसि कोपं पादगतं बहुगुणमाद्रियस्वैनम्
ननु मुञ्च हृदयनाथं सदयं मनसस्तमोरूपम्" ॥

अत्र, पादगतं बहुगुणं हृदयनाथं किमिति न पश्यसि इमं सदयमाद्रियस्व मनसस्तमोरूपं कोपं मुञ्चेत्यन्वयः । एकवाक्यगतत्वे तु क्लिष्टत्वमित्यस्माद्भेदः ।

---

तथाहि महतां जनानां सम्पत्तौ सम्पदि च विपत्तौ विपदि च एकरूपता तुल्यता सम्पदि विपदि च महान्तः समभावेनैवावतिष्ठन्ते इति भावः ।

(२०) यश इति । यशः कीर्त्तिं अधिगन्तुं लब्धुं सुखस्य लिप्सया लाभेच्छया वा मनुष्यसङ्ख्यां मनुष्यगणनाम् अतिवर्त्तितुम् अतिक्रमितुम् अमानुषीं क्रियां कर्त्तुमिति यावत् वा निरुत्सुकानां निरुद्वेगानाम् अभियोगभाजाम् उद्योगिनां निरुद्वेगेनोद्योगसातत्यवतामित्यर्थः सिद्धिः समुत्सुकेव समुत्कण्ठिता कामिनीव अङ्कं क्रोड़ मुपैति आगच्छति ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

वाक्यान्तरे वाक्यान्तरप्रवेशो गर्भितत्वम् *। यथा,—

"परापकारनिरतैर्दुर्जनैः सह सङ्गतिः।
कर्त्तव्यः साधुसंसर्गो न विधेया कदाचन"॥

अथ तृतीयपादवाक्यं वाक्यान्तरमध्ये प्रविष्टम्।

अर्थदोषानाह,—

"दुष्क्रममग्राम्यकष्टत्वं व्याहतत्वमहेतुता।
अनवीकृतता पौनरुक्त्यं ख्यातिविरुद्धता॥

---

* गर्भितत्वं क्वचिद्गुणः यथा,—

"दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सापि वदन्त एव हि वयं रोमाञ्चिताः पश्यत।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमः
यस्मात् प्रादुरभूत् कथाद्भुतमिदं यत्रैव चास्तं गतम्"॥ (३१)

अत्र "वदन्त एव हि" इत्यादिवाक्यं वाक्यान्तरमध्ये प्रविष्टं चमत्कारातिशयं पुष्णाति।

---

(३१) दिङ्मातङ्गेति। सर्वां पृथिवीं जित्वा विप्रसात् कृतवन्तं परशुरामं दृष्ट्वा जनानामुक्तिः। दिङ्मातङ्गानां दिग्गजानां घटाभिः समूहैः चतुष्टयैरिति भावः विभक्ता विभज्य गृहीताः चतस्रः आघाटाः सीमानः यस्याः तादृशी मही पृथ्वी साध्यते उपार्ज्यते महामहिमशालिभिरिति शेषः सा मही सिद्धापि विप्राय प्रतिपाद्यते समर्प्यते वदन्त एव वयं रोमाञ्चिताः सञ्जातरोमहर्षाः जाता इति शेषः पश्यत अवलोकयत अपरं किम् वक्तव्यमिति शेषः, यस्मात् रामात् इदं कथाद्भुतम् अद्भुतकथेत्यर्थः प्रादुरभूत् जाता, यत्रैव च रामे अस्तं गतं तस्मै रामाय नमः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अनुवादो विधेयश्चैवमर्थदोषाः प्रकीर्त्तिताः" ॥

दुष्क्रमता दुं दुष्टोविरुद्ध इति यावत् क्रमो वचनक्रमो यस्मिन् स दुष्क्रमः, यथा, वसन्तादिवर्णने प्रथमं प्रवालो-द्गमस्य ततः कुसुमोत्पत्तेरनन्तरं पुष्पेषु शिलीमुखानामा-पतनमिति यथाक्रममेवैतेषामाविष्करणमुचितम्, विशि-ष्टहेतुं विना ततोऽन्यथावर्णने दुष्क्रमतादोषः, एवमन्य-त्रापि।

ग्राम्यत्वं * यथा,—

ताम्रभृङ्गारतुल्योऽयमर्को मज्जति वारिधौ। (३२)

कष्टत्वमर्थंप्रतीतेर्व्यवहितत्वम्। यथा,—

"सदा मध्ये यासामियममृतनिष्यन्दसरसा

सरस्वत्युद्दामा वहति बहुमार्गां परिमलम्।

---

* ग्राम्यत्वमधमोक्तिषु गुणः. यथा,—

"एसो ससहरबिम्बो दीसइ हेअङ्गवीणपिण्डोव्व।

एदेश्च रस्सिसमोहा पडन्ति आसासु दुद्धधाराव्व" ॥

"एष शशधरबिम्बो दृश्यते हैयङ्गवीनपिण्ड इव।

एते च रश्मिसमूहाः पतन्ति आशासु दुग्धधारा इव" ॥

(३३) स०।

इयं हि विदूषकोक्तिः।

---

(३२)ताम्रे ति। ताम्रभृङ्गारेण रक्तवर्णजलपात्रविशेषेण तुल्यः अर्कः सूर्यः वारिधौ समुद्रे निमज्जति अस्तमेतीत्यर्थः।

(३३) एदेश्च इति। एते च रश्मिसमूहाः किरणसङ्घाः आशासु दिक्षु दुग्धधारा इव पतन्ति।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

प्रसादं ता एता घनपरिचिताः केन महतां
महाकाव्यव्योम्नि स्फुरितमधुरा यान्तु रुचयः" ॥ (२४)

अत्र यासां कविरुचीनां मध्ये सुकुमारविचित्रमध्यमा-लङ्कारत्रिमार्गा भारती चमत्कारं वहति, ता गम्भीरकाव्य-परिचिताः कथमितरकाव्यवत् प्रसन्ना भवन्तु इत्येकोऽर्थः। यासामादित्यप्रभाणां मध्ये त्रिपथगा वहति, ता मेघ-परिचिताः कथं प्रसन्ना भवन्तीति द्वितीयोऽर्थः। अर्थद्वय-मपि नितरां दुर्बोधम्। शब्दानां परिवर्त्तनेऽपि क्लिष्ट-तायास्तादवस्थ्यादयमर्थदोषः।

कस्यचित् प्रागुत्कर्षमपकर्षं वाभिधाय पश्चात्तदन्यथा-प्रतिपादनं व्याहतत्वम्। यथा,—

---

(२४) सदेति। कल्लनवत् निष्यन्दः प्रकाश इति यावत् तेन सरसा रसवती बहुमार्गा नानारीतिसङ्कुटिता उद्दामा प्रौढ़ा इयं सरस्वती वाणी यासां रुचीनां मध्ये सदा परिमलं सौरभं वहति रुचीनां स्वदते इति भावः। अन्यत्र बहुमार्गा त्रिपथगेत्यर्थः उद्दामा उत्कटवेगा कल्लननिष्यन्दिनी सरस्वती मन्दाकिनीत्यर्थः यासां सौरीणां रुचीनां किरणानां मध्ये सदा परिमलं देवाङ्गनानां विमर्दजनित-गन्धं वहति, ता एता महतां स्फुरितेन सहजबोधेनेति भावः मधुरा मधुरास्वादवत्यः रुचयः अभिलाषाः महाकाव्यं दुर्बोधकाव्यं व्योमेव आकाशमिव तस्मिन् घनपरिचिताः अतिपरिचिता अपिरला-ध्याहार्य्याः केन कथं प्रसादं प्रसन्नतां यान्तु ? न कथमपि प्रसन्ना भवन्तीत्यर्थः अन्यत्र ता एता महतां भास्वतामित्यर्थः स्फुरितेन विकाशेन मधुरा मनोहारिण्यः रुचयः प्रभाः महाकाव्यमिव व्योम तस्मिन् घनपरिचिताः मेघाच्छादिता इति यावत् केन कथं प्रसादं यान्तु न कथमपि प्रसन्ना भवन्तीत्यर्थः।



CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"हरन्ति हृदयं यूनां न नवेन्दुकलादयः ।
वीक्ष्यते यैरियं तन्वी लोकलोचनचन्द्रिका" ॥ (२५)

अत्र येषामिन्दुकला नानन्दहेतुस्तेषामेवानन्दाय तन्व्यां चन्द्रिकात्वारोपः ।

अहेतुता (निर्हेतुता) * हेतोरवचनम्, यथा,—

* "निर्हेतुता तु ख्यातेऽर्थे दोषतां नैव गच्छति" ।
यथा, "चन्द्रं गता पद्मगुणान्न भुङ्क्ते
पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखन्तु प्रतिपद्य लोला
द्विसंश्रयां प्रीतिमवाप लक्ष्मीः" ॥ (२६) कुमार०

अत्र रात्रौ पद्मस्य सङ्कोचः, दिवा चन्द्रमसश्च निष्प्रभत्वं लोकप्रसिद्धमिति 'न भुङ्क्ते' इत्यत्र हेतुं नापेक्षते ।

(२५) हरन्तीति । यैः युवभिः लोकानां लोचनचन्द्रिका नयनानन्दिनीति यावत् इयं तन्वी कृशाङ्गी वीक्ष्यते अवलोक्यते नवेन्दुकलादयः अभिनवाश्चन्द्रकलाप्रभृतयः तेषां यूनां हृदयं न हरन्ति नाकर्षन्ति ।

(२६) चन्द्रमिति । पार्वत्या मुखवर्णनमिदम् । लोला चपला लक्ष्मीः चन्द्रं गता रात्राविति भावः पद्मगुणान् कमलस्थितिजनितसुखानीति यावत् न भुङ्क्ते नास्वादयति, पद्माश्रिता दिवसे इति भावः अङ्कम्भोजं विकसतीति कविसमयप्रसिद्धेः । चान्द्रमसीं चान्द्रीम् अभिख्यां शोभां अभिख्या नाम शोभयोरित्यमरः । न भुङ्क्ते । त किन्तु उमायाः पार्वत्या मुखं प्रतिपद्य प्राप्य द्विसंश्रयां चन्द्रकमलवासजनितामिति भावः प्रीतिम् आनन्दम् अवाप प्राप । पार्वत्या वदनं चन्द्रः कमले च नेत्रे तेषाञ्च दिवारात्रं तुल्यविकाशित्वादिति भावः ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"गृहीतं येनासीः परपरिभवान्नोचितमपि
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भयाद्-
विमोक्ष्ये शस्त्र! त्वामहमपि ततः स्वस्ति भवते" ॥ (३७)
(वेणीसंहार०)

अत्र द्वितीयशस्त्रमोचने हेतुर्नोक्त इति निर्हेतुत्वम्।

अनवीकृतत्वं * यथा,—

"प्राप्ताः श्रियः सकलकामदुघा, स्ततः किं?
दत्तं पदं शिरसि विद्विषतां, ततः किम्?।
सन्तर्पिताः प्रणयिनो विभवै, स्ततः किं?
कल्पं स्थितं तनुभृतां तनुभि, स्ततः किम्"? ॥ (३८)

---

* भङ्ग्यन्तरेण निर्देश्यत्वं नवीकृतत्वम्। 'किं ततः' इत्यत्र 'किं तस्मात्' इत्यादिरूपेण शब्दपरिवर्त्तनेऽपि उत्कर्षाभावादनवीकृतत्वमेवेति कथितपदत्वाद्भेदः।

---

(३७) गृहीतमिति। अश्वत्थाम्न उक्तिरियं हे शस्त्र! येन मत्पित्रेति शेषः त्वं परपरिभवात् शत्रुभिः परिभवभयादित्यर्थः नोचितम् अनुचितग्रहणमपीति यावत् ब्राह्मणस्य शस्त्रग्रहणनिषेधादिति भावः गृहीतम् अवलम्बितम् आसीः, यस्य मत्पितुः प्रभावात् कश्चिदपि जन इति शेषः तव न विषयः अपि सर्व एव जन स्तव गोचरीभूत इत्यर्थः द्रोणस्य सर्वजयित्वादिति भावः। तेन मम पित्रा सुतशोकात् न तु भयात् त्वं परित्यक्तम् असि अहमपि त्वां विमोक्ष्ये त्यक्ष्यामि ततः अतः परमित्यर्थः भवते तुभ्यं स्वस्ति शुभं भूयादिति शेषः।

(३८) प्राप्ता इति कस्यचिद्विरागिण उक्तिरियम्। सकलकाम-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अत्र ततः किमिति न नवीकृतम्।

पौनरुक्तं यथा,—

"अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन् मम पितरि गुरौ सर्वधन्वीश्वराणाम्।
कर्णालं सम्भ्रमेण व्रज कृप! समरं मुञ्च हार्दिक्य! शङ्कां
ताते चापद्वितीये वहति रणधुरां को भयस्यावकाशः" ॥

(३९) (वेणीसंहार०)

अत्र चतुर्थपादवाक्यार्थः पुनरुक्तः।

---

दुघाः सर्वमनोरथपूरण्यः श्रियः सम्पदः प्राप्ताः जनैरिति शेषः सर्वत्र योज्यः। ततः किम्? न किमपीत्यर्थः, विद्विषतां वैरिणां शिरसि पदं दत्तं वैरिणो निर्जिता इति भावः ततः किम्?। विभवैः सम्पद्भिः प्रणयिनः बन्धवः सन्तर्पिताः प्रीणिताः ततः किम्?। तनुभृतां प्राणिनां तनुभिः शरीरैः कल्पं प्रलयकालं यावदित्यर्थः स्थितं प्राणिनः प्रलयपर्य्यन्तजीविन इत्यर्थः ततः किम्?। सर्वमेवालीकमसारञ्च जगदिति भावः।

(३९) अस्त्रेति। अस्त्राणां ज्वालाभिः अवलीढः ग्रस्तः यः प्रतिबलजलधिः प्रतिपक्षसैनिकसागरः तस्य अन्तः अभ्यन्तरे और्वायमाणे वड़वानले इवाचरति सर्वधन्वीश्वराणां सर्वेषां महाधनुर्धराणां गुरौ आचार्य्ये सेनानाथे मम पितरि अस्मिन् द्रोणे इति शेषः स्थिते वर्त्तमाने हे कर्ण! सम्भ्रमेण भयेन अलं भयं मा कुरु इत्यर्थः हे कृप! समरं संग्रामक्षेत्रं व्रज गच्छ, हे हार्दिक्य हृदिकनन्दन! कृतवर्म्मन्नित्यर्थः शङ्कां त्रासं मुञ्च त्यज, चापद्वितीये धनुर्धरे ताते पितरि रणधुरां संग्रामभारं वहति सति भयस्य अवकाशः अवसरः कः? नैव भयसम्भव इत्यर्थः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

ख्यातिविरुद्धता * यथा,—

* "कवीनां समये ख्याते गुणः ख्यातविरुद्धता"।
(विश्वनाथः।)

कविसमयख्यातानि च दर्पणे,—

मालिन्यं व्योम्नि पापे यशसि धवलता वर्ण्यते हासकीर्त्त्योः
रक्तौ च क्रोधरागौ सरिदुदधिगतं पङ्कजेन्दीवरादि।
तोयाधारेऽखिलेऽपि प्रसरति च मरालादिकः पक्षिसंघो
ज्योत्स्ना पेया चकोरैर्जलधरदिवसे मानसं यान्ति हंसाः॥
पादाघातादशोकं विकसति बकुलं योषितामास्यमद्यै-
र्यूनामङ्गेषु हाराः स्फुटति च हृदयं विप्रयोगस्य तापैः।
मौर्वी रोलम्बमाला धनुरथ विशिखाः कौसुमाः पुष्पकेतो-
र्भिन्नं स्यादस्य बाणैर्युवजनहृदयं स्त्रीकटाक्षेण तद्वत्॥
अह्न्यम्भोजं निशायां विकसति कुमुदं चन्द्रिका शुक्लपक्षे
मेघध्वानेषु नृत्यं भवति च शिखिनां नाप्यशोके फलं स्यात्।
न स्याज्जाती वसन्ते न च कुसुमफले गन्धसारद्रुमाणा-
मित्याद्युन्नेयमन्यत् कविसमयगतं सत्कवीनां प्रबन्धे"॥ (४०)

(४०) मालिन्यमिति। व्योम्नि आकाशे पापे च मालिन्यं यशसि हासकीर्त्त्योश्च धवलता वर्ण्यते आकाशं पापञ्च कृष्णवर्णं यशः कीर्त्तिर्हासश्च श्वेतवर्णौ वर्णनीय इत्यर्थः क्रोधरागौ कोपानुरागौ रक्तौ रक्तवर्णौ वर्ण्येते इति शेषः। पङ्कजेन्दीवरादि सरिदुदधिगतं नदीसमुद्रगतं वर्ण्यते इति शेषः। रोलम्बमाला भ्रमरश्रेणी। मौर्वी ज्या। विशिखाः शराः। पुष्पकेतोः कामस्य। चन्द्रिका शुक्लपक्षे वर्णनीयेति शेषः शिखिनां मयूराणाम् गन्धसारद्रुमाणां चन्दनतरूणाम्। अन्यत् सुगमम्।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"ततश्चचार समरे शितशूलधरो * हरिः"।

अत्र हरेः शूलं लोकेऽप्रसिद्धम्।

विधेर्विधेयस्य अनुवादः अप्राधान्येन निर्देशः, यथा,—

'प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशाम्' इत्यत्र अयितः प्रयत्नेन बोध्यसे इति विधेयम्।

रसदोषानाह,—

"रसस्योक्तिः स्वशब्देन स्थायिसञ्चारिणोरपि।
प्रतिकूलविभावादिग्रहो दीप्तिः पुनः पुनः॥
अकाण्डे प्रथनच्छेदावङ्गस्याप्यतिविस्तृतिः।
अङ्गिनोऽननुसन्धानं प्रकृतीनां विपर्य्ययः॥"
इत्यादिकाः सहृदयै रसे दोषाः प्रकीर्त्तिताः॥

रसस्य स्वशब्देन रसेतिशब्देन हास्यादिशब्देन वाऽभिधानम्, स्थायिनां हासादीनां सञ्चारिणां निर्वेदादीनाञ्च स्वनाम्ना कथनं दोषः।

† प्रतिकूलानां विरुद्धानां विभावादीनां ग्रहो ग्रहणम्। यथा, आदिमे निर्वेदादीनां शान्तसञ्चारिणां, वीरे च वैवर्ण्यं त्रासादीनाम् भयानकस्यानुभावादीनां ग्रहणम्।

पुनः पुनर्दीप्तिर्यथा, कादम्बर्य्यां महाश्वेताविलापे।

---

* अत्र शूलशब्दस्य पर्य्यायान्तरेणोपादानेऽपि दोषस्यास्य सद्भाव इति प्रसिद्धहतत्वाद्भेदः।

† "सञ्चार्य्यादेर्विरुद्धस्य बाध्यत्वेन वचो गुणः"।

विश्वनाथः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अकाण्डेऽनुचितेऽवसरे प्रथनं प्रकटनं, यथा वेणीसंहारे द्वितीयेऽङ्के अनेकवीरसंक्षये प्रवृत्ते दुर्य्योधनस्य भानुमत्या प्रसोद्वर्णनम्।

अकाण्डे छेदो यथा वीरचरिते राघवभार्गवयोर्धाराधिरूढे संग्रामे "कङ्कणमोचनाय गच्छामि" इति राघवस्योक्तिः।

---

यथा,—

"क्वाकार्य्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय मे श्रुतमहो कोपेऽपि कान्तं मुखम्।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति" (४१)

विक्रमो०

अत्र प्रथमाङ्गानां वितर्कमतिशङ्काधृतीनामभिलाषौत्सुक्यस्मृतिदैन्यचिन्ताभिस्तिरस्कारः।

---

(४१) क्वाकार्य्यमिति। अकार्य्यं कुमार्गगमनमित्यर्थः क्व, शशलक्ष्मणः चन्द्रस्य कुलञ्च क्व? चन्द्रवंशोत्पन्नस्य मम आश्चर्य्यं न कथमपि युज्यते इति भावः, सा उर्वशी भूयोऽपि पुनरपि दृश्येत पुनस्तां द्रष्टुं प्राप्नुयामि किमित्यर्थः। मे मम श्रुतं शास्त्रं दोषाणां कुकार्य्याणां प्रशमाय शान्तये, अहो इति विषादे कोपेऽपि मुखं तस्या इति शेषः कान्तं मनोहरम्। अपकल्मषाः निष्पापाः कृतधियः विद्वांसः किं वक्ष्यन्ति? ईदृशं मां दृष्ट्वा निन्दिष्यन्तीत्यर्थः सा स्वप्नेऽपि दुर्लभा अदर्शनीयेति यावत् हे चेतः चित्त, स्वास्थ्यं धैर्य्यम् उपैहि अवलम्बस्व कः खलु धन्यो भाग्यवान् युवा अधरं तस्या इति शेषः धास्यति दास्यति।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अङ्गस्य अतिविस्तृतिः किरातार्जुनीये सुराङ्गना-विलासादिवर्णने ।

अङ्गिनोऽननुसन्धानं यथा रत्नावल्यां चतुर्थेऽङ्के बाभ्र-व्यागमने सागरिकाया विस्मृतिः ।

प्रकृतयो दिव्याः, अदिव्याः, दिव्यादिव्याश्च, तेषु च धीरोदात्तादयः, तत्र यो यथाभूतस्तस्यायथावर्णने प्रकृति-विपर्य्ययो दोषः, यथा रामस्य छद्मना बालिबधः, यथा वा कुमारसम्भवे अष्टमे उत्तमदैवतयोः पार्वतीपरमेश्वरयोः सम्भोगवर्णनम् ।

उक्तानां दोषाणां केषाञ्चित् क्वचिददोषत्वं क्वचिद्-गुणत्वञ्च । तच्च तत्तद्दोषोल्लेखस्थलेषु पत्राधोभागे द्रष्ट-व्यम् ।

**"अनुकरणे च सर्वेषां दोषाणां स्याददोषता" ।**

यथा,—प्रलपत्येष वैधेयः 'स्कन्धस्ते यदि बाधति' । (४२)

अत्र बाधतीति दुष्टमप्यनुकरणत्वाददुष्टम् ।

इति दोषविवेचनं नाम पञ्चमशिखा ।

---

(४२) प्रलपतीति एष वैधेयः मूर्खः प्रलपति वक्ति । अन्यत् स्पष्टम् ।

इति पञ्चमशिखा ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

## षष्ठशिखा।

गुणस्वरूपमाह मम्मटः,—

"ये रसस्याङ्गिनो धर्म्माः शौर्य्यादय इवात्मनः।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः"॥

आत्मन एव हि यथा शौर्य्यादयः, नाकारस्य, तथा रसस्यैव माधुर्य्यादयो गुणाः न वर्णानाम्। अचलस्थितयो नियतावस्थानाः।

"माधुर्य्यौजः प्रसादाख्यास्त्रयस्ते" समुदीरिताः।

माधुर्य्यलक्षणमुक्तं काव्यप्रकाशे,—

"आह्लादकत्वं माधुर्य्यं" चित्तस्य "द्रुतिकारणम्"।

आह्लादकत्वमानन्दजनकत्वम्. द्रुतिर्गलितत्वमिव।

"करुणे विप्रलम्भे तत् शान्ते चातिशयान्वितम्"।

अत्यन्तद्रुतिहेतुत्वादित्यर्थः।

"मूर्द्ध्नि वर्गान्त्यवर्णेन युक्ताष्टठडढान् विना।
रणौ लघू च तद्व्यक्तौ वर्णाः कारणतां गताः।
अवृत्तिरल्पवृत्तिर्वा मधुरा रचना तथा"॥ (१)

(विश्वनाथः)

---

(१) मूर्द्ध्नीति। मूर्द्ध्नि शिरसि वर्गस्य अन्त्यवर्णेन पञ्चमवर्णेन युक्ताः ङ्क ञ्च प्रभृतय इत्यर्थः ट ठ ड ढान् विना टादिव्यतिरिक्ता

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

यथा,—

"तदिदं क्रियतामनन्तरं भवता बन्धुजनप्रयोजनम्।

विधुरां ज्वलनातिसर्जनान्ननु मां प्रापय पत्युरन्तिकम्" ॥

(२) कु०स०।

ओजःस्वरूपं तद्व्यञ्जकं वर्णादिकञ्चाह विश्वनाथः,—

"ओजश्चित्तस्य विस्ताररूपं दीप्तत्वमुच्यते ॥

वीरबीभत्सरौद्रेषु क्रमेणाधिक्यमस्य तु" ॥

"वर्गस्याद्यतृतीयाभ्यां युक्तौ वर्णौ तदन्तिमौ।

उपर्यधोद्वयोर्वा सरेफाष्टठडढैः सह ॥

शकारश्च षकारश्च तस्य व्यञ्जकतां गताः।

तथा समासबहुला घटनौद्धत्यशालिनी" ॥ (३)

---

इत्यर्थः लघू दीर्घस्वरायुक्तौ रणौ च रकारो णकारश्च वर्णाः तद्व्यक्तौ तस्य माधुर्य्यस्य व्यक्तौ प्रकटने कारणतां हेतुतां गताः हेतवो भवन्तीत्यर्थः तथा अवृत्तिः असमस्ता अल्पवृत्तिर्वा अल्पसमस्ता वा मधुरा मनोहारिणी रचना तद्व्यक्तौ कारणतां गतेति शेषः।

(२) तदिति। कामविरहिण्या रतेर्वसन्तं प्रति विलापोक्तिरियम्। हे वसन्त! तत् तस्मात् भवता इदम् अनन्तरम् अतःपरकरणीयं बन्धुजनप्रयोजनं मित्रकृत्यं क्रियताम् अनुष्ठीयतां किं तदित्याह विधुरामिति ननु सखे! विधुरां कातरां मां ज्वलनातिसर्जनात् अग्निप्रदानात् पत्युरन्तिकं स्वामिसन्निधिं प्रापय नय।

(३) ओज इति। चित्तस्य मनसः विस्ताररूपं दीप्तत्वम् ज्वलितत्वम् ओजः उच्यते वीरबीभत्सरौद्रेषु अस्य ओजसः क्रमेण आधिक्यं वीररसे ओजः,, बीभत्सरसे ततोऽपि अधिकमोजः रौद्रे तु ततोऽपि अधिकमित्यर्थः। वर्गस्य आद्यतृतीयाभ्यां क ग च ज ट ड त द पबैरित्यर्थः

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

यथा,—"चञ्चद्भुजभ्रमितचण्डगदाभिघात-

सञ्चूर्णितोरुयुगलस्य सुयोधनस्य ।

स्त्यानावनद्धघनशोणितशोणपाणि-

रुत्तंसयिष्यति कचांस्तव देवि ! भीमः" ॥ (४)

वेणीसं० ।

प्रसादस्वरूपं तद्व्यञ्जकान् वर्णांश्चाह स एव,—

"चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः ।

स प्रसादः समस्तेषु रसेषु रचनासु च ।

शब्दास्तद्व्यञ्जका अर्थबोधकाः श्रुतिमात्रतः" ॥

यथा,—

---

युक्तौ तदन्तिमौ तयो राद्यतृतीययोः कगादीनामित्यर्थः अन्तिमौ परवर्त्तिनौ ख घ छ झ ठ ढ थ ध भा इत्यर्थः वर्णौ यथा क्ख ग्घ इत्यादयः तथा उपरि अधः द्वयो र्वा उपर्य्यध इत्यर्थः सरेफाः रेफसहिता यथा अर्क अग्र आर्द्र इत्यादयः टठडढैः सह टादि-सहिता इत्यर्थः शकारस्य षकारस्य एते वर्णाः तस्य ओजसः व्यञ्जकतां प्रकाशकत्वं गताः । तथा समासबहुला बहुसमस्तपदा औद्धत्यशालिनी उत्कटा घटना रचना पदविन्यासः तस्य व्यञ्जकतां गतेति शेषः ।

(४) चञ्चदिति । पाञ्चालीं प्रति युधिष्ठिरस्योक्तिरियम् । हे देवि ! भीमः चञ्चद्भ्यां चलद्भ्यां भुजाभ्यां भ्रमिता घूर्णिता या चण्डगदा तया अभिघातेन प्रहारेण संचूर्णितम् ऊरुयुगलं यस्य तथाभूतस्य सुयोधनस्य स्त्यानेन विस्तृतेन अवनद्धेन संश्लिष्टेन घनेन गाढ़ेन शोणः रक्तः पाणिर्यस्य तादृशः सन् तव कचान् केशान् उत्तंसयिष्यति संयंस्यति ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम्"॥

(५) रघु०।

इत्यादिकं कालिदासग्रन्थेषु रामायणे च बाहुल्येन द्रष्टव्यम्।

"एषां शब्दगुणत्वञ्च गुणवृत्त्योच्यते बुधैः"।

गुणवृत्त्या परम्परया।

इति गुणविवेको नाम षष्ठशिखा।

---

## सप्तमशिखा।

---

रीतिस्वरूपं तद्भेदांश्चाह,—

"अस्त्यनेको गिरां मार्गः सूक्ष्मभेदः परस्परम्।
तत्र वैदर्भगौड़ीयौ वर्ण्येते प्रस्फुटान्तरौ"॥

दण्डी।

---

(५) गृहिणीति। इन्दुमतीविरहे अजस्य राज्ञ प्रलापवचनमिदम्। हे प्रिये! त्वं मम गृहिणी गृहस्वामिनी सचिवः मन्त्री मिथः एकान्ते सखी सहचारिणी तथा ललिते मनोज्ञे ललितं त्रिषु सुन्दरमिति कोषः कलाविधौ नृत्यगीतादिव्यापारे प्रियशिष्या अतः त्वां हरता करुणाविमुखेन निर्दयेन मृत्युना अन्तकेन मे मम किं न हृतं वद, सर्वमेव गृहिण्यादिकं हृतमित्यर्थः।

इति षष्ठशिखा।

---

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

प्रस्फुटान्तरौ स्फुटप्रतीयमानभेदौ । मार्गः रीतिः, सा च पदविन्यासप्रणालीरूपा । यथाह विश्वनाथः,—

"पदसङ्घटना रीतिरङ्गसंस्थाविशेषवत्' । (१)

वैदर्भीस्वरूपमाह स एव,—

"माधुर्य्यव्यञ्जकैर्वर्णैः रचना ललितात्मिका ।
अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते" ॥

ललितात्मिका मधुरस्वरूपा, वृत्तिः समासः, यथा, "तदिदं क्रियताम्" (पृ० ८२) इत्यादि पूर्वमुक्तम्,—

"ओजः प्रकाशकैर्वर्णैर्बन्ध आडम्बरः पुनः ।
समासबहुला गौड़ी" दर्पणे समुदीरिता ॥

बन्धः रचना, आड़म्बरः गाढ़ः । यथा,—

'चञ्चद्भुजभ्रमित' इत्यादि (पृ० ८३) पूर्वमुक्तम् ।

इति रीतिविवेचनं नाम सप्तमशिखा ।

---

(१) पदेति । पदानां सुप्तिङन्तानां सङ्घटना संयोजना सम्यक् विन्यास इत्यर्थः । अङ्गानाम् अवयवानां संस्थाविशेषवत् यथास्थानविन्यासवत् रीतिः प्रणाली ।

इति सप्तमशिखा ।

——



CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

# अष्टमशिखा ।



अलङ्कारस्वरूपमाह,—

"काव्यशोभाकरान् धर्म्मानलङ्कारान् प्रचक्षते" ।

दण्डी ।

ते च द्विविधाः, शब्दगताः अर्थगताश्च । शब्दगताः अनुप्रासयमकादयः । तत्र,—

"अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत्" ।

स्वरवैसादृश्येऽपि व्यञ्जनमात्रसादृश्यं मनुप्रासः, स च रसानुगुणो वर्णानां प्रकर्षेण न्यासः । यथा,—

लताकुञ्जं गुञ्जन्मदवदलिपुञ्जं चपलयन्
समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन् ।
मरुन्मन्दं मन्दं दलितमरविन्दं तरलयन्
रजोवृन्दं विन्दन् किरति मकरन्दं दिशि दिशि" ।

(१) विश्वनाथः ।

---

(१) लतेति । गुञ्जन्तः गुणगुणध्वनिं कुर्वन्तः मदवन्तः मोल्लासा अलीनां भ्रमराणां पुञ्जा यस्मिन् तादृशं लताकुञ्जं व्रततीमण्डलं चपलयन् कम्पयन् अङ्गं शरीरं प्राणिनामिति शेषः समालिङ्गन् संस्पृशन् द्रुततरं सद्यः अनङ्गं मदनं प्रबलयन् वर्द्धयन् दलितं विकसितं अरविन्दं कमलं तरलयन् चञ्चलीकुर्वन् रजोवृन्दं रजसां परागाणां वृन्दं चयं विन्दन् लभमानः सन् मरुत् वायुः दिशि दिशि

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"सत्यर्थे पृथगर्थाया: स्वरव्यञ्जनसंहते:।
क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते"॥ (२)

विश्वनाथः।

अत्र द्वयोरपि वर्णसङ्घातयो: क्वचित् सार्थकत्वं क्वचिन्निरर्थकत्वं क्वचिदेकस्य सार्थकत्वमपरस्य निरर्थकत्वमत उक्तं 'सत्यर्थे' इति, तेनैव क्रमेणेति 'दमोमोद' इत्यादेर्विविक्तविषयत्वम् (३)। एतच्च पदपादाद्यावृत्तित्वेन प्रभूततमभेदम् (४)। दिङ्मात्र(५)मुदाह्रियते,—

"नवपलाशपलाशवनं पुरः
स्फुटपरागपरागतपङ्कजम्।
मृदुलतान्तलतान्तमलोकयत्
स सुरभिं सुरभिं सुमनोभरैः"॥ (६) माघः।

---

मकरन्दं पुष्परसं किरति वर्षति। वसन्तवर्णनमिदम्। अत्र प्रथमे पादे ञ्ज इति द्वितीये पादे ङ्क इति तृतीये चतुर्थे च पादे न्द इति व्यञ्जनसङ्घानां पुनः पुनरावृत्तिः।

(२) सतीति। अर्थे सति विद्यमाने पृथगर्थायाः भिन्नार्थायाः स्वरव्यञ्जनसंहतेः तेनैव क्रमेण पूर्वावृत्तक्रमेणेत्यर्थः आवृत्तिः पुनःपुनरुच्चारणम् यमकं विनिगद्यते कथ्यते।

(३) विविक्तविषयत्वं विभिन्नविषयत्वम्।

(४) प्रभूततमभेदं बहुतरप्रकारम्।

(५) दिङ्मात्रं प्रदर्शनमात्रमित्यर्थः।

(६) नवेति। राजसूये निमन्त्रितस्य इन्द्रप्रस्थं गच्छतः कृष्णस्य पथि वसन्ताविर्भावदर्शनवर्णनमिदम्। स कृष्णः पुरः अग्रतः नवानि पलाशानि पत्राणि यत्र तादृशं पलाशवनं किंशुककाननं यस्मिन्

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

प्रथमे पादे द्वयोरपि, द्वितीये प्रथमस्यैव, तृतीये च द्वितीयस्यैव सार्थकत्वम्, चतुर्थे द्वयोरपि 'रभिंसु' इत्येतयोर्निरर्थकत्वम्।

"श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते"।

(७) विश्वनाथः।

स च वर्णप्रत्ययप्रकृतिपदादिविशेषात् बहुविधः यथा,—
"प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि"॥

(८) माघः।

---

तयोक्तं स्फुटैः प्रचुरैः परागैः रजोभिः परागतानि व्याप्तानि पङ्कजानि पद्मानि यस्मिन् तथाविधं मृदुलाभिः कोमलाभिः ताम्राभिः पल्लवकुसुमभरेणावनताभिः लताभिः वल्लीभिः अन्तं रम्यं तथा सुमनसां पुष्पाणां भरैः समूहैः सुरभिं सुगन्धं सुरभिं वसन्तं व्यलोकयत् अपश्यत्।

(७) श्लिष्टैरिति। श्लिष्टैः नानार्थैः पदैः सुबन्ततिङन्तरूपैः अनेकानां बहूनाम् अर्थानाम् अभिधाने अभिधया प्रतिपादने श्लेष इष्यते अभिधया बह्वर्थप्रतिपादनमेव श्लेष इति फलितम्।

(८) प्रतिकूलतामिति। सूर्य्यास्तवर्णनमिदम्। विधौ विधातरि चन्द्रे च प्रतिकूलतां विरोधिताम् उदयोन्मुखत्वञ्च उपगते प्राप्ते सति बहुसाधनता विविधोपायवत्त्वं विफलत्वं वैफल्यम् एति प्राप्नोति। हि तथाहि पतिष्यतः अस्तं गमिष्यत इति यावत् दिनभर्तुः सूर्य्यस्य कराणां किरणानां हस्तानाञ्च बलिहस्तांशवः करा इत्यमरः सहस्रमपि अवलम्बनाय आश्रयाय पतनप्रतिबन्धायेति यावत् न अभूत्। विधिर्विधाने दैवेचेति विधुः सुधांशुः शुभ्रांशुरिति चामरः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अत्र विधावित्यत्र विधुविधिशब्दयोरुकारेकारयोरीकाररूपत्वाद् वर्णश्लेषः, करेत्यत्र प्रकृतिश्लेषोऽपि ।

"पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ! ।
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम्" ॥ (९)

अत्र पदश्लेषः ।

अर्थालङ्काराः स्वभावोक्त्युपमादयश्च । तत्र स्वभावोक्तेर्वस्तुस्वभाववर्णनस्वरूपत्वात् स्वभाववर्णनञ्च वस्तूनां प्रकृतञ्चेत्तद्वस्तूनि प्रत्यक्षमिव दर्शयित्वा सहृदयमनांसि नितरामाकर्षतीति तस्या अतीव चमत्कारित्वात्तामेव प्रथममाह ।

"स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्" । (१०)

---

(९) पृथ्वित्विति । राजानं प्रति कस्यचिद् भिक्षोरुक्तिः । हे देव ! सम्प्रति आवयोः तव मम चेत्यर्थः सदनं गृहं पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं तथा विलसत्करेणुगहनम् अतएव समं तुल्यम् । अर्थस्तु पृथूनि बहूनि कार्त्तस्वरपात्राणि सौवर्णभाजनानि यस्मिन् तत् अन्यत्र पृथुकानां शिशूनां पृथुकः शावकः शिशुरित्यमरः आर्त्तस्वरस्य आहाराभावेन कातररवस्य पात्रं स्थानम् । भूषिताः अलङ्कृताः निःशेषाः समस्ताः परिजनाः परिवारा यस्मिन् तथाविधम् अन्यत्र भुवि भूतले शय्यादिरहिते इति भावः उषिताः स्थिताः निःशेषाः परिजना यस्मिन् तथाविधम् । विलसद्भिः विलसन्तीभिश्च करेणुभिः हस्तिभिः हस्तिनीभिश्च करेणुरिभ्यां स्त्रीनेभे इत्यमरः । गहनं निविड़ं पूर्णमित्यर्थः अन्यत्र विलेषु गर्त्तेषु सीदन्तीति विलसदो-मूषिकाः तेषां रेणुभिः रजोभिः गहनं पूर्णम् ।

(१०) स्वभावोक्तिरिति । चारु मनोज्ञं सहृदयहृदयरञ्जनमित्यर्थः यथावद् यथास्थितं वस्तुनः विषयस्य वर्णनम् असौ स्वभावोक्तिः ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

यथा अभिज्ञानशकुन्तले

"ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
शष्पैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति" ॥(११)

यथा वा तत्रैव पञ्चमाङ्कादौ कञ्चुकिनो जरावर्णनम् । तत्रैव च सप्तमे नृपशिशोः सिंहशावकास्कन्दनविक्रान्तिवर्णनम् । उपमास्वरूपमुक्तमादर्शे,—

"प्रस्फुटं सुन्दरं साम्यमुपमेत्यभिधीयते" ।(१२)

प्रस्फुटमिति रूपकादेर्गम्यसाम्याद्भेदाय, सुन्दरं वैचित्र्यजनकं, तेन "गौरिव गवयः" इत्यत्र नायमलङ्कारः, साम्यं सादृश्यम् । साम्यञ्च क्रियागतं, गुणगतम्, उभयगतञ्चेति त्रिविधम् ।

क्रमेणोदाहरणानि, तत्र क्रियागतं यथा,—

---

(११) ग्रीवेति । अयं मृग इति पूर्वेणान्वयः । अनुपतति अनुगच्छति स्यन्दने रथे ग्रीवाभङ्गाभिरामं ग्रीवाया भङ्गेन अभिरामं मनोज्ञं यथा तथा मुहुः पुनः पुनः दत्तदृष्टिः दृष्टिं ददत् शरस्य पतनभयात् पश्चार्द्धेन देहस्य पश्चिमभागेन भूयसा बाहुल्येन पूर्वकायं प्रविष्टः तथा अर्द्धावलीढैः अर्द्धजग्धैः अतएव श्रमेण विवृतात् प्रकटितात् मुखात् भ्रंशन्तीति तथोक्तैः शष्पैः बालतृणैः कीर्णवर्त्मा आच्छादितपथः सन् उदग्रप्लुतत्वात् अतिप्लुतगतित्वात् वियति आकाशे बहुतरम् अत्यन्तं तथा उर्व्यां पृथिव्यां स्तोकमल्पं प्रयाति धावति पश्य अवलोकय ।

(१२) प्रस्फुटमिति । प्रस्फुटं सुव्यक्तम् । अन्यत् स्पष्टम् ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"क्षणात् प्रबोधमायाति लङ्घ्यते तमसा पुनः।
निर्वास्यतः प्रदीपस्य शिखेव जरतो मतिः"॥ (१३) अ॰ श॰

अत्र 'आयाति' 'लङ्घ्यते' इति च क्रियाद्वयस्य उपमेये उपमाने च साम्यम्।

गुणगतं यथा,—

"हरस्तु किञ्चित् परिलुप्तधैर्य्यश्चन्द्रोदयारम्भ इवाम्बुराशिः।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि"॥
(१४) कु॰ स॰।

अत्र परिलुप्तधैर्य्यत्वं गुण उभयत्रापि समानः।

उभयगतं यथा,—

"स्नपयति हृदयेशं स्नेहनिष्यन्दिनी ते
धवलबहलमुग्धा दुग्धकुल्येव दृष्टिः"॥ (१५) उत्तरच॰।

अत्र स्नपयतीति क्रियासाम्यं 'स्नेहनिष्यन्दिनी धवलबहलमुग्धा' इति गुणसादृश्यञ्च।

---

(१३) क्षणादिति। जरतः जरां गच्छतः स्थविरस्येत्यर्थः मतिः निर्वास्यतः निर्वाणं गमिष्यतः प्रदीपस्य शिखेव क्षणात् क्षणमात्रेण प्रबोधं प्रकृष्टं ज्ञानं विकाशञ्च आयाति प्राप्नोति पुनः क्षणात् तमसा मोहेन तिमिरेण लङ्घ्यते आक्रम्यते आव्रियते इत्यर्थः।

(१४) हर इति। हरस्तु चन्द्रोदयस्य आरम्भे अम्बुराशिः समुद्र इव किञ्चित् ईषत्परिलुप्तं विनष्टं धैर्य्यं यस्य तथाभूतः सन् बिम्बफलाधरोष्ठे उमायाः पार्वत्या मुखे विलोचनानि नेत्राणि व्यापारयामास पातयामास चुम्बनार्थं साभिलाषमद्राक्षीदिति भावः।

(१५) स्नपयतीति। ते तव धवला बहलमुग्धा अतिमनोहारिणी स्नेहनिष्यन्दिनी स्नेहवर्षिणी दृष्टिः दुग्धकुल्येव क्षीरसरिदिव हृदयेशं जीवितेश्वरं स्नपयति आर्द्रयतीत्यर्थः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"मालोपमा यदेकस्योपमानं बहु दृश्यते"।

विश्वनाथः।

यथा,—

"प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः।
संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च"॥

(१६)

"तद्रूपकमभेदो य उपमानोपमेययोः"।

मम्मटः।

उपमानं चन्द्रादि, उपमेयं मुखादि। प्रकाशित-विभिन्नस्वरूपयोरपि उपमानोपमेययोरतिसाम्यप्रदर्शनाय काल्पनिकोऽभेदारोपो रूपकमित्यर्थः। यथा,—

"पर्याप्तपुष्पस्तवकस्तनाभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः।
लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि"॥

(१७) कु० स०।

---

(१६) प्रभेति। स हिमवान् प्रभामहत्या प्रभोज्ज्वलया शिखया दीप इव, त्रिमार्गया मन्दाकिन्या त्रिदिवस्य स्वर्गस्य मार्ग इव तथा संस्कारवत्या विशुद्धया गिरा वाचा मनीषीव विद्वानिव तया पार्वत्या पूतश्च पवित्रीकृतश्च विभूषितश्च अलङ्कृतश्च।

(१७) पर्याप्तेति। वसन्तवर्णनमिदम्। तरवोऽपि इत्यत्र अपि किमु वक्तव्यं सचेतनानामित्यपिशब्दार्थः। पर्याप्ताः प्रभूताः पुष्पाणां स्तवका गुच्छा एव स्तना यासां ताभ्यः स्फुरद्भिः विकसद्भिः प्रवालैः नवपल्लवैरेव ओष्ठैः मनोहराभ्यः लता एव वध्वः ताभ्यः विनम्राः शाखा एव भुजाः तैः बन्धनानि वेष्टनानि आलिङ्गनानीत्यर्थः अवापुः प्रापुः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अत्र लतासु वधूनां पुष्पस्तवकादिषु च स्तनादीनामभेदारोपः।

**"सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्"।**

काव्यप्रका०।

प्रकृतस्य उपमेयस्य, समेन उपमानेन। सम्भावनञ्च उत्कटकोटिकः संशयः, अप्रस्तुतकोटेरुत्कटत्वञ्च प्रस्तुतकोटेर्निगरणेन जायते, निगरणञ्च प्रस्तुतस्य क्वचिदनुपादानेन क्वचिदुपात्तस्याप्यधःकरणेन भवति। यदुक्तम्,—

**"विषयस्यानुपादानेऽप्युपादाने च सूरयः।**
**अधःकरणमात्रेण निगीर्णत्वं प्रचक्षते" ॥ (१८)**

विषयः प्रस्तुतम्। क्रमेणोदाहरणम्,—

"लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता"। (१९) मृच्छ०

अत्र तमसः प्रसरसम्पातादिरूपो विषयो नोपात्तः।

---

(१८) विषयस्येति। सूरयः विद्वांसः विषयस्य प्रस्तुतस्य अनुपादाने अग्रहणे उपादाने ग्रहणेऽपि अधःकरणमात्रेण निगीर्णत्वं निगरणं प्रचक्षते कथयन्ति अधःकरणमेव निगरणमिति फलितम्।

(१९) लिम्पतीति। सन्ध्यावर्णनमिदम्। तमः अन्धकारम् अङ्गानि अवयवानि लिम्पतीव लिप्तानि करोतीव नभः अन्तरीक्षम् अञ्जनं कज्जलं वर्षतीव दृष्टिः चक्षुः असतां पुरुषाणां सेवेव विफलतां निष्फलतां गता दर्शनव्यापाररहित्यादिति भावः। अत्र तमःप्रसरसम्पातरूपौ विषयौ लेपनवर्षणाभ्याम् अधःकृताविति बोध्यम्।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"समयः स वर्त्तत इवैष यत्र मां
समनन्दयत् सुमुखि! गौतमार्पितः।
अयमागृहीतकमनीयकङ्कण-
स्तव मूर्त्तिमानिव महोत्सवः करः" ॥ (२०) उ०च०।

अत्र विषयःकर उपात्तोऽपि मूर्त्तिमन्महोत्सवरूपे-णाधःकृतः।

"मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः" ॥
(२१) दण्डी।

मन्ये प्रभृतयः शब्दा उत्प्रेक्षाव्यञ्जकाः।

"सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते"।
विश्वनाथः।

प्रकृतस्य निगरणेनाभेदज्ञानमप्रकृतस्य अध्यवसायः, तस्य च उत्प्रेक्षायामप्रस्तुतस्यानिश्चितत्वेन निर्देशात् साध्यत्वम् इह तु निश्चितत्वेनैव प्रतीतिरिति सिद्धत्वमित्यनयोर्भेदः। निगरणञ्च उभयत्रापि समानमेव। यथा,—

---

(२०) समय इति। हे सुमुखि! एष स समयः वर्त्तत इव, यत्र अयं गौतमेन गोतमनन्दनेन शतानन्देन अर्पितः समन्त्रं प्रदत्तः आगृहीतं धृतं कङ्कणं हस्ताभरणविशेषः हस्तसूत्रं वा येन तादृशः तव करः मूर्त्तिमान् देहवद्धः महोत्सव इव मां समनन्दयत्।

(२१) मन्ये इति। इव शब्दोऽपि तादृशः उत्प्रेक्षाव्यञ्जक इत्यर्थः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"अकालजलदावली किरतु नाम मुक्तावली-
रपर्वणि विधुन्तुदस्तुदतु हन्त शीतद्युतिम्।
इदन्तु महदद्भुतं यदनपायिविद्युल्लता-
वलम्बिकनकाचलद्वयमधोमुखं लम्बते"॥ (२२)

अत्र केशादेर्जलदावल्यादिरूपेणाध्यवसानम्। यथावा,—

"दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम्।
कौमारकेऽपि गिरिवद्गुरुतान्दधानो
वीरो रसः किमयमित्युत दर्प एषः"॥ (२३) उ०च०।

---

(२२) अकालेति। अकाले असमये जलदानां मेघानाम् आवली राजिः मुक्तावलीः मुक्ताप्रकरान् किरतु वर्षतु नाम सम्भावनायाम् अकालमेघराजिभ्यो मुक्तावर्षणं सम्भाव्यते इत्यर्थः। विधुन्तुदो राहुः अपर्वणि पौर्णमासीव्यतिरिक्ते काले शीतद्युतिं चन्द्रं तुदतु ग्रसतु हन्तेत्यपि सम्भवनायां तदपि सम्भाव्यते इति भावः तु किन्तु अनपायिनी स्थायिनीत्यर्थः या विद्युल्लता सौदामनीवल्ली तस्याम् अवलम्बते इति तथोक्तं कनकाचलद्वयं सौवर्णगिरियुगलम् अधोमुखं सत् लम्बते इति यत् इदं महत् अद्भुतम् आश्चर्य्यम्। स्नातोत्थितायाः कस्याश्चिन्नायिकायाः केशकलापात् सम्मुखस्थितात् जलनिःसारणव्यापारवर्णनमिदम्। अत्र केशादिरूपोविषयोनोपात्तः जलदावल्यादिरूपेण निश्चिततयाधःकृतः प्रतीयते।

(२३) दृष्टिरिति। दृष्टिः तृणीकृतः तृणवदवगणित इत्यर्थः जगत्त्रयस्य त्रिजगतामित्यर्थः सत्त्वसारः प्रभावोत्कर्षः यया तादृशी। धीरा चोद्धता गतिः पादविक्षेपः धरित्रीं पृथिवीं नमयतीव नतां करोतीव। एषः कौमारकेऽपि शैशवेऽपि गिरिवत् पर्वतवत् गुरुतां गौरवं दधानः अतएव वीरो रसः किम्? उत अथवा दर्पः एति

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अत्र कुग्रस्य वीररसरूपेण दर्पंरूपेण चाध्यवसानम्। प्रथमे विषयः केशादिर्नोपात्तः, द्वितीयेऽयमित्यनेनोपात्तोऽप्यधःकृतः।

"प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम्।
कार्य्यकारणयोर्य्यश्च पौर्वापर्य्यविपर्य्ययः।
विज्ञेयातिशयोक्तिः सा" ऽप्यन्यैव प्रथमोक्ततः॥

(२४) काव्यप्रका०।

क्रमेणोदाहरणम्,—

"अन्यदेवाङ्गलावण्यमन्याः सौरभसम्पदः।
तस्याः पद्मपलाशाक्ष्याः सरसत्वमलौकिकम्"॥ (२५)

---

आगच्छति। अन्यमता यदतिशयोक्त्यलङ्कार इत्युक्तं तद्धेयम् अत्र किमुतशब्दाभ्यां संशयद्योतकाभ्याम् अध्यवसायस्य अनिश्चिततया प्रतीतेः, निश्चिततया प्रतीतेरेव अतिशयोक्तिविषयत्वात्। अस्मन्मते तु अत्र सन्देहालङ्कार एवेति बोध्यम्।

(२४) प्रस्तुतस्येति। प्रस्तुतस्य विषयस्य अन्यत्वं पृथकत्वं पृथक्तयाध्यवसानमित्यर्थः यद्यर्थोक्तौ कल्पनं यदि शब्दार्थवशात् कल्पितेन अप्रस्तुतेन प्रस्तुतस्य अध्यवसानमित्यर्थः। कार्य्यकारणयोः पौर्वापर्य्यविपर्य्ययः कारणात् पूर्वं कार्य्यस्य भावितारूपेण, समकालत्वेन वा अध्यवसानं द्वितीयातिशयोक्तिरिति बोध्यं सर्वत्रैवाध्यवसानमस्तीति सुधीभिर्भाव्यम्।

(२५) अन्यदिति। तस्याः पद्मपलाशाक्ष्याः कमलदललोचनायाः कान्ताया इति शेषः अङ्गानां लावण्यं कान्तिविशेषः मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते इति अन्यदेव पृथगेव सौरभसम्पदः गुणश्रियः अन्याः अपराः, सरसत्वं

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

यदि शब्देन तत्पर्य्यायान्तरेण वा यदर्थस्य कथनेऽस-म्भविनोऽर्थस्य कल्पनमित्यर्थः । यथा,—

"पुष्पं प्रवालोपहितं यदि स्या-
न्मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्य्याद्विशदस्य तस्या-
स्ताम्रोष्ठपर्य्यस्तरुचः स्मितस्य" ॥ (२६) कु० स० ।

कार्य्यकारणयोः पौर्वापर्य्यविपर्य्ययश्च द्विधा भवति कारणात् पूर्वं कार्य्यस्य भावे, द्वयोः समकालत्वे च ।

क्रमेण यथा,—

"उदेति पूर्वं कुसुमं ततः फलं
घनोदयः प्राक् तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं क्रम-
स्तव प्रसादस्य पुरस्तु सम्पदः" ॥ (२७) श० श० ।

---

रसिकत्वम् अलौकिकं लोकविलक्षणम् । अत्र प्रस्तुतस्य लावण्यस्य अन्यत्वेनाध्यवसानम् ।

(२६) पुष्पमिति । पार्वत्याः स्मितवर्णनमिदम् । यदि पुष्पं प्रवाले नवपल्लवे उपहितम् अर्पितं वा मुक्ताफलं मौक्तिकं स्फुटे समुज्ज्वले विद्रुमे प्रवाले तिष्ठतीति तथोक्तं स्यात् ततः तदा तस्याः पार्वत्याः विशदस्य स्वच्छस्य ताम्रोष्ठपर्य्यस्तरुचः रक्ताधरपतितप्रभस्य स्मितस्य मृदुहासस्य अनुकुर्य्यात् स्मितस्येति कर्मणि षष्ठी । अत्र यदि शब्दार्थबलात् प्रवालोपहितपुष्पादिना स्मितमध्यवसीयते ।

(२७) उदेतीति । पूर्वं प्रथमं फलोदयात् प्रागित्यर्थः कुसुमं पुष्पम् उदेति विकसति, ततः कुसुमोदयादनन्तरं फलम् उदेतीति शेषः, प्राक् घनानां मेघानाम् उदयः, तदनन्तरं पयः जलं भव-



CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"सममेव समाक्रान्तं द्वयं द्विरदगामिना।
तेन सिंहासनं पित्र्यमखिलञ्चारिमण्डलम्॥ (२८) रघु०

**"उपमानाद्यदन्यस्य व्यतिरेकः स एव सः"।**

मम्मटः।

अन्यस्य उपमेयस्य, व्यतिरेक आधिक्यम्। स एव व्यतिरेकालङ्कारः। यथा,—

"चन्द्रं गता पद्मगुणान्न भुङ्क्ते
पद्माश्रिता चान्द्रमसीमभिख्याम्।
उमामुखन्तु प्रतिपद्य लोला
द्विसंश्रयां प्रीतिमवाप लक्ष्मीः"॥ (२९) कु०स०।

अत्र उपमाभूतचन्द्रपद्मापेक्षया उपमेयस्य उमामुखस्य अधिकगुणवत्त्वकथनम्। यथा वा,—

"दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे"॥ (३०) रघु०

---

तीति शेषः। निमित्तनैमित्तिकयोः कारणकार्य्ययोः अयं क्रमः नियमः तत्र प्रसादस्य अनुग्रहस्य तु पुरः अग्रत एव सम्पदः भवन्तीति शेषः। अत्र प्रसादस्य सम्पदां पश्चाद्भावितया अध्यवसानम्।

(२८) सममेवेति। द्विरदगामिना गजपतिना तेन रघुना पित्र्य सिंहासनम् अखिलम् अरिमण्डलं शत्रुमण्डलञ्च द्वयं सममेव समाक्रान्तम् अधिकृतम् अभिभूतञ्चेत्यर्थः अत्र सिंहासनाक्रमात् परभावि शत्रुमण्डलाक्रमणम् उभयोः समकालभावितया अध्यवसानम्।

(२९) चन्द्रं गतेति। पूर्वं व्याख्यातम् (७४ पृ०)।

(३०) दिशीति। दक्षिणस्यां दिशि रवेः सूर्य्यस्यापि तेजः मन्दायते अल्पायते, तस्यामेव दिशि दक्षिणस्यां पाण्ड्याः तदाख्य-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अत्र उपमानभूतात् सूर्य्यादपि रघोः प्रतापातिशय-वर्णनम्।

"प्रतिवस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययोः।
एकोऽपि धर्म्मः सामान्यो यत्र निर्दिश्यते पृथक्"॥

(२१) विश्वनाथः।

प्रतीयमानसादृश्ययोर्वाक्ययोरेकस्यापि धर्मस्य पौनरुक्त्यभिया शब्दान्तरेण निर्देशः प्रतिवस्तूपमा। यथा,—

"मधुश्च ते मन्मथ! साहचर्य्यादसावनुक्तोऽपि सहाय एव।
समीरणो नोदयिता भवेति व्यादिश्यते केन हुताशनस्य"?॥

(२२) कु॰स॰।

अत्र अनुक्तस्यापि सहजसहायस्य स्वत एव साहाय्य-सम्पादने प्रवृत्तिरित्येक एवार्थः शब्दान्तरेण निर्दिष्टः।

---

क्षत्रियाः रघोः प्रतापं कोषदण्डजं तेजः सप्रभावः प्रतापश्च यत्तेजः कोषदण्डजमित्यमरः। न विषेहिरे न सोढुं शेकुरित्यर्थः। रघुर्दिग्विजयवर्णनमिदम्।

(२१) प्रतिवस्तूपमेति। यत्र गम्यसाम्ययोः प्रतीयमान-सादृश्ययोः वाक्ययोः एकोऽपि अभिन्नोऽपि सामान्यो धर्मः गुण-क्रियारूपः पृथक् पौनरुक्त्यभिया पर्य्यायान्तरेण निर्दिश्यते, सा प्रतिवस्तूपमा वस्तुनि वस्तुनि प्रतिवस्तु तस्य उपमेति व्युत्पत्तिरत्र बोध्येति।

(२२) मधुरिति। कामं हरसमाधिभङ्गोद्यतं प्रति इन्द्रस्योक्तिरियम्। हे मन्मथ! काम! असौ पुरोवर्त्तीत्यर्थः मधुर्वसन्तश्च अनुक्तोऽपि अकथितोऽपि साहचर्य्यात् सहचरत्वात् ते तव सहाय एव भविष्यतीति शेषः, त्वं हुताशनस्य अग्नेः नोदयिता सहायः भव इति समीरणः वायुः केन व्यादिश्यते नियुज्यते? न केनापीत्यर्थः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

यथा वा,—

"धन्यासि वैदर्भि ! गुणैरुदारै-
र्यया समाकृष्यत नैषधोऽपि।
इतः स्तुतिः का खलु चन्द्रिकाया
यदब्धिमप्युत्तरलीकरोति" ॥ (३३)

अत्र समाकर्षणरूप एक एव धर्मः भङ्ग्यन्तरेण पृथङ्-निर्दिष्टः।

"अभवन् वस्तुसम्बन्ध उपमापरिकल्पकः"।
निदर्शना भवेत्सेयं मम्मटेन यथोदिता ॥ (३४)

उपमापरिकल्पकः पर्य्यवसाने साम्यबोधकः। यथा,—

"क्व सूर्य्यप्रभवो वंशः क्व चाल्पविषया मतिः।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्"। (३५) रघुव०

(३३) धन्यासीति। हे वैदर्भि ! त्वं धन्या भाग्यवती असि, यया त्वया उदारैः महद्भिः गुणैः सौन्दर्य्यादिभिः नैषधः निषधराजः नलोऽपि समाकृष्यत समाकृष्टः, अब्धिं समुद्रमपि उत्तरलीकरोति चपलयतीति यत्, चन्द्रिकायाः इतः अस्मात् का स्तुतिः प्रशंसा खलु।

(३४) अभवन्निति। वस्तुनः विषयस्य सम्बन्धः अन्वयः अभवन् असम्भवन् अघटमान इत्यर्थः उपमायाः सादृश्यस्य परिकल्पकः प्रतिपादकः सा इयं निदर्शना मम्मटेन यथोदिता यथा कथिता।

(३५) क्वेति। सूर्य्यः प्रभवति अस्मादिति प्रभवः कारणं यस्य स वंशः क्व ? अल्पो विषयो यस्याः तथाभूता मतिश्च क्व ? नानयोः सङ्गतिः कदाचिदपि भवितुमर्हतीति क्व इयस्यार्थः। अहं मोहात् अज्ञानात् उडुपेन भेलेन दुस्तरं सागरं तितीर्षुः अस्मि। अत्र

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अत्र नन्मत्या सूर्य्यवंशवर्णनमुडुपेन सागरतरणमिवेत्युपमायां पर्य्यवस्यति । यथा वा,--

"अभ्युन्नताङ्गुष्ठनखप्रभाभिर्निक्षेपणाद्रागमिवोद्गिरन्तौ ।
आजह्रतुस्तच्चरणौ पृथिव्यां स्थलारविन्दश्रियमव्यवस्थाम्" ॥
(३६) कु०स० ।

अत्र उपमाधर्मस्य अरविन्दश्रियश्चरणयोरुपमेयभूतयोरसम्भवादरविन्दश्रियमिव श्रियमित्युपमायां पर्य्यवसानम् ।

## "दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्" ।

सधर्मस्य समानधर्मस्य वस्तुनो विषयस्य प्रतिबिम्बनं प्रणिधानेन गम्यसाम्यत्वम् । प्रतिवस्तूपमायामेकस्यैव धर्मस्य भङ्ग्यन्तरेण निर्देशः इत्यस्माद्भेदः । यथा,--

"नैतल्लघ्वपि भूयस्या वचो वाचातिशय्यते ।
इन्धनौघधगप्यग्निस्त्विषा नात्येति पूषणम्" । (३७) माघ०

---

नन्मत्या सूर्य्यवंशवर्णनरूपं वस्तु असम्भवत् उपमायां परिकल्पते इति बोध्यम् ।

(३६) अभ्युन्नतेति । तस्याः पार्वत्याश्चरणौ अभ्युन्नतयोरङ्गुष्ठनखयोः प्रभाभिः रागं रक्तम् उद्गिरन्ताविव पृथिव्याम् अव्यवस्थां चञ्चलां स्थलारविन्दश्रियम् आजह्रतुः आहृतवन्तौ प्रापतुरित्यर्थः ।

(३७) नैतदिति । एतत् वासुदेवं वचः लघु स्वल्पमपि भूयस्या बहुतरया वाचा न अतिशय्यते नातिक्रम्यते, अग्निः इन्धनौघधगपि काष्ठराशिदाहकोऽपि त्विषा तेजसा पूषणं सूर्य्यं न अत्येति नातिक्रामति । अत्र अन्यकृता यद् दृष्टान्तालङ्काराभिधानं तद्धेयम् अत्र एकस्यैव धर्मस्य अतिक्रमरूपस्य वाक्ययोः पर्य्यायान्तरेण निर्देशात्

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"सामान्यं वा विशेषो वा तदन्येन समर्थ्यते।
यत्र सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा" ॥

मम्मटः।

साधर्म्येण वैधर्म्येण वा सामान्यं विशेषेण विशेषो वा सामान्येन यत्समर्थ्यते सोपपत्तिकतया दृढ़ क्रियते सोऽर्थान्तरन्यासः। समर्थ्यसमर्थकवाक्ययोः सामान्यविशेषभावेऽर्थान्तरन्यासः, दृष्टान्ते तु न तथेत्यनयोर्भेदः (३८)।

सामान्यं विशेषेण यथा,—

"बृहत्सहायः कार्य्यान्तं क्षोदीयानपि गच्छति।
सम्भूयाम्भोधिमभ्येति महानद्या नगापगा" ॥ (३९)

शिशुपाल०।

अत्र द्वितीयार्द्धगतेन विशेषार्थेन पूर्वार्द्धगतः सामान्योऽर्थः समर्थ्यते। विशेषः सामान्येन यथा,—

यावदर्थपदां वाचमेवमादाय माधवः।

---

प्रतिवस्तूपमैव। दृष्टान्तोदाहरणन्तु

अविदितगुणापि सत्कविभणितिः कर्णेषु वमति मधुधाराम्।
अनधिगतपरिमलापि हरति दृशं मालती माला ॥

इति बोध्यम्।

(३८) समर्थ्यसमर्थकवाक्ययोः सामान्यविशेषभावेऽर्थान्तरन्यासः दृष्टान्ते प्रतिवस्तूपमायाञ्च न तथेति परस्परम् भेदः।

(३९) बृहदिति। क्षोदीयानपि अतिक्षुद्रोऽपि बृहत्सहायः महासहायः सन् कार्य्यान्तं गच्छति, नगापगा गिरिनिर्झरिणी महानद्या सम्भूय मिलित्वा अम्भोधिं समुद्रम् अभ्येति प्राप्नोति।

(४०) यावदिति। माधवः कृष्णः एवम् उक्तप्रकारां यावन्तोऽर्था

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

विरराम महीयांसः प्रकृत्या मितभाषिणः" ॥ (४०)

शिशुपाल०।

अत्र द्वितीयार्द्धगतेन सामान्येनार्थेन प्रथमार्द्धगतो विशेषोऽर्थः समर्थ्यते। वैधर्म्येण यथा,—

"इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम्।
शाम्येत्प्रत्यपकारेण नोपकारेण दुर्जनः" ॥ (४१) कु०स०

अत्र द्वितीयार्द्धगतेन सामान्येनार्थेन प्रथमार्द्धगतो विशेषोऽर्थो वैधर्म्येण समर्थ्यते।

**"पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत्।
एकधर्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता" ॥**

विश्वनाथः।

केवलं प्रस्तुतानामप्रस्तुतानां वा एकधर्मसम्बन्धः तुल्ययोगिता। यथा,—

"यं सर्वशैलाः परिकल्प्य वत्सं
मेरौ स्थिते दोग्धरि दोहदक्षे।

---

इति यावदर्थं साकल्येऽव्ययीभावः यावदर्थं पदानि यस्याः तां वाचम्
आदाय उक्त्वा इत्यर्थः विरराम, महीयांसः महत्तराः प्रकृत्या स्व-
भावेन मितभाषिणः अल्पवादिनो भवन्तीति शेषः।
 आराध्यमानोऽपि
(४१) इत्थमिति। इत्थम् अनेन प्रकारेण
सेव्यमानोऽपि स तारक इति पूर्वेणान्वयः। भुवनत्रयं क्लिश्नाति
तापयति, दुर्जनः प्रत्यपकारेण शाम्येत् उपकारेण न। अत्र क्लेश-
शमने विरुद्धधर्माविति बोध्यम्।
 दोहनकुशले
(४२) यमिति। सर्वशैलाः सर्वे पर्वताः दोहदक्षे
मेरौ दोग्धरि दोहके स्थिते सतीत्यर्थः यं हिमालयं वत्सं परिकल्प्य

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

भास्वन्ति रत्नानि महौषधीश्च
पृथूपदिष्टां दुदुहुर्धरित्रीम्" ॥ (४२) कु० स०।

अत्र हिमवद्वर्णनस्य प्रकृतत्वात् तद्गतौषधिरत्नानां द्वयानामपि प्रकृतत्वम्, तेषां दोहनक्रियारूपैकसमानधर्मसम्बन्धात् केवलप्राकरणिकविषयोऽयमलङ्कारः।

"नागेन्द्रहस्तास्त्वचि कर्कशत्वा-
देकान्तशैत्यात् कदलीविशेषाः।
लब्ध्वापि लोके परिणाहि रूपं
जातास्तदूर्व्वोरुपमानवाह्याः" ॥ (४३) कु० स०

अत्र नागेन्द्रहस्तानां कदलीविशेषाणाञ्च द्वयानामप्यप्रस्तुतानां परिणाहिरूपलाभक्रियायाः समानधर्मस्य सम्बन्धात् केवलाप्राकरणिकविषयकमिदमुदाहरणम्।

**"अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते"।**

विश्वनाथः।

अप्रस्तुतप्रस्तुतयोरेकधर्माभिसम्बन्धो दीपकम्। यथा,—

बलावलेपादधुनापि पूर्ववत्
प्रबाध्यते तेन जगज्जिगीषुणा।

---

पृथुना राज्ञा उपदिष्टां निर्दिष्टां धरित्रीं भास्वन्ति प्रभापूर्णानि रत्नानि महौषधीश्च दुदुहुः।

(४३) नागेन्द्रेति। नागेन्द्रहस्ता गजशुण्डादण्डा इत्यर्थः त्वचि चर्म्मणि कर्कशत्वात् काठिन्यात्, कदलीविशेषाः एकान्तशैत्यात् अतिशीतलत्वात् लोके जगति परिणाहि विशालं परिणाहो विशालतेत्यमरः। रूपं लब्ध्वापि तदूर्व्वोः तस्याः पार्व्वत्याः ऊर्व्वोः उपमीयते अनेनेति उपमानं तस्मात् वाह्याः वहिःस्थिता जाताः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

सती च योषित् प्रकृतिश्च निश्चला
पुमांसमभ्येति भवान्तरेष्वपि" ॥ (४४) शि० व०

अत्र प्रस्तुतायाः प्रकृतेरप्रस्तुतायाः पतिव्रतायाश्च जन्मान्तरेऽपि स्वकीयपुरुषानुगमनरूपैकक्रियासम्बन्धः ।

"अथ कारकमेकं स्यादनेकासु क्रियासु चेत्" ।

विश्वनाथः ।

तत्रापि दीपकमेव । यथा,—

"विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा
प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः ।
तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो-
विकारश्चैतन्यं भ्रमयति च सम्मीलयति च" ॥ (४५)

उ० च० ।

अत्र भ्रमयति सम्मीलयति चेत्युभयोः क्रिययोः कर्तृकारकमेकं विकार इति कर्मकारकञ्चैकं चैतन्यमिति ।

---

(४४) बलावलेपादिति । जिगीषुणा तेन शिशुपालेन बलावलेपात् बलदर्पात् अधुनापि पूर्ववत् पूर्वजन्मनीव जगत् प्रबाध्यते प्रपीड्यते । सती साध्वी योषित् नारी निश्चला स्थिरा प्रकृतिः स्वभावश्च भवान्तरेष्वपि जन्मान्तरेष्वपि पुमांसं पुरुषम् अभ्येति प्राप्नोति ।

(४५) विनिश्चेतुमिति । सीतां प्रति रामस्योक्तिः । हे प्रिये ! तव स्पर्शे स्पर्शे प्रतिस्पर्शं सुखमिति वा दुःखमिति वा प्रमोहो वा निद्रा वा, विषविसर्पः विषेण व्याप्तता किमु, मदः मद्यपानजनितावस्था किमु विनिश्चेतुं विशेषेण निर्द्धारयितुं न शक्यः, हि यतः परिमूढः विवश इत्यर्थः इन्द्रियगणो येन तादृशो मम विकारः चैतन्यं भ्रमयति च सम्मीलयति च आवृणोति च ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः"।

विश्वनाथः।

भेदोक्तौ तदनुक्तौ च द्विधाऽसौ परिकीर्त्तितः॥

प्रकृते उपमेये, अन्यस्य उपमानस्य। प्रतिभा कवि-प्रौढ़ोक्तिः तया उत्थितः, तेन स्थाणुर्वा पुरुषो वेति सन्देहे नायमलङ्कारः। भेदो वैधर्म्यम्। भेदोक्तौ यथा,—

"अयं मार्त्तण्डः किं ? स खलु तुरगैः सप्तभिरितः
कृशानुः किं ? सर्वाः प्रसरति दिशो नैष नियतम्।
कृतान्तः किं ? साक्षान्महिषवहनोऽसाविति चिरं
समालोक्याजौ त्वां विदधति विकल्पान् प्रतिभटाः"॥(४६)

भेदानुक्तौ यथा,—

"अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः ?
'चित्तोन्माद'रसः स्वयं नु मदनो मासो नु पुष्पाकरः ?।

---

(४६) अयमिति। अयं किं मार्त्तण्डः सूर्य्यः ? न हीत्याह, स मार्त्तण्डः खलु निश्चितं सप्तभिः तुरगैः अश्वैः इतः युक्तः, अयन्तु न तथेति भावः। कृशानुः अग्निः किम् ? न हीत्याह एषः कृशानुः नियतं सर्वा दिशो न प्रसरति न विराजते इत्यर्थः प्रसिद्धमूर्द्ध्वज्वलनं हविर्भुज इति नायं तथेति भावः। साक्षात् स्वयं कृतान्तः अन्तकः किम् ? नहीत्याह असौ कृतान्तः महिषवहनः नायं तथेति भावः प्रतिभटाः प्रतिवीराः आजौ युद्धे त्वां समालोक्य चिरं बहुक्षणम् इति विकल्पान् तर्कान् विदधति कुर्वन्ति।

(४७) अस्या इति। उर्वशीं दृष्ट्वा पुरुरवसस्तर्कोक्तिः। अस्याः उर्वश्याः सर्गविधौ सृष्टिव्यापारे कान्तिप्रदः लावण्यदः चन्द्रः प्रजापतिः स्रष्टा अभूत् नु, चित्तस्य उन्मादे उन्मत्तीकरणे रसः अनुरागो

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

वेदाभ्यासजड़: कथं नु विषयव्यावृत्तकौतूहलो-
र्निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः” ॥ (४७)

विक्रमो० ।

“साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभो-
त्थिता” ॥ (४८)

विश्वनाथः ।

प्रतिभोत्थितेति ‘शुक्तिकायां रजतम्’ इति भ्रान्ति-
र्नास्यालङ्कारस्य विषयः । यथा,—

“महाराज ! श्रीमन् ! जगति यशसा ते धवलिते
पयःपारावारं परमपुरुषोऽयं मृगयते ।
कपर्दी कैलासं करिवरमथायं कुलिशभृत्
कलानाथं राहुः कमलभवनो हंसमधुना” ॥ (४९)

---

यस्य तथाभूतः मदनः कामः स्वयं नु प्रजापतिरभूदिति शेषः अथवा पुष्पाकरो वसन्तः मासः नु, प्रजापतिरभूदिति शेषः । वेदाभ्यासेन जड़ः मन्थरमतिः अतएव विषयेभ्यः स्रक्चन्दनवनितादिभ्यो व्यावृत्त निवृत्तं कौतूहलं यस्य तथाभूतः पुराणो मुनिः वदरिकाश्रमवासी नारायणः इदं मनोहरं रूपं निर्मातुं कथं नु प्रभवेत् शक्नुयात् न कथमपीत्यर्थः ।

(४८) साम्यादिति । अतस्मिन् वस्तुनीति शेषः साम्यात् सादृश्यात् प्रतिभोत्थिता कविप्रौढ़ोक्तिसमुद्भूता तद्वस्तुबोधः भ्रान्तिमान् ।

(४९) महाराजेति । हे श्रीमन् महाराज ! ते तव यशसा जगति धवलिते शुक्लीकृते अधुना अयं परमपुरुषः पयःपारावारं क्षीरसागरं, कपर्दी शम्भुः कैलासम्, अयं कुलिशभृत् वज्री करिवरम् ऐरावतं राहुः कलानाथं चन्द्रं कमलभवनः ब्रह्मा हंसं मृगयते अन्विष्यति ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अत्र भोजराजस्य यशसा धवलीकृते जगति सर्वत्रापि परमपुरुषादीनां समुद्रादिभ्रान्तिः कविप्रतिभोत्थितेति भ्रान्तिमानलङ्कारः।

"प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः"।

(५०) विश्वनाथः।

इहापि कविप्रौढ़ोक्तिसिद्धमेव। यथा,—

"नेदं नभोमण्डलमम्बुराशि-
र्नैताश्च तारा नवफेणभङ्गाः।
नायं शशी कुण्डलितः फणीन्द्रो
नासौ कलङ्कः शयितो मुरारिः" ॥ (५१)

अत्र प्रकृतानां नभोमण्डलादीनां प्रतिषेधेन अम्बुराशिप्रभृतीनामप्रस्तुतानां स्थापनम्। यथा वा,

"दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः।
मणिव्याजेन पर्य्यस्ताः पृथिव्यामश्रुबिन्दवः" ॥ (५२)

रघुवंशम्।

---

(५०) प्रकृतमिति। प्रकृतं प्रस्तुतं प्रतिषिध्य निषिध्य अन्यस्य अप्रकृतस्य स्थापनम् अपह्नुतिः स्यात्।

(५१) नेदमिति। इदं नभोमण्डलम् आकाशमण्डलं न, अम्बुराशिः समुद्रः, एताश्च तारा नक्षत्राणि न, नवाः फेनानां भङ्गाः छेदाः। अयं शशी चन्द्रो न, कुण्डलितः मण्डलाकारेण स्थितः फणीन्द्रः शेषः, असौ कलङ्कः न, शयितः मुरारिः नारायणः।

(५२) दशाननेति। तत्क्षणं रामजन्मक्षणे इत्यर्थः राक्षसानां श्रियः लक्ष्म्याः अश्रुबिन्दवः बाष्पकणाः मणिव्याजेन दशाननस्य रावणस्य किरीटेभ्यः मुकुटेभ्यः पर्य्यस्ताः पतिताः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अत्र प्रस्तुतानां मणीनां प्रतिषेधेन अश्रुबिन्दूनां स्थापनम्। समासोक्तिलक्षणमुक्तमाग्नेये,—

"यत्रोक्ताद्गम्यतेऽन्योऽर्थस्तत्समानविशेषणः।
सा समासोक्तिरुदिता संक्षेपार्थतया बुधैः"॥

तत्समानविशेषण इत्युपलक्षणम्, तेन तत्समानकार्य्यैः तत्समानलिङ्गैश्च गृह्यते। यत्र समैर्विशेषणैः कार्य्यैर्लिङ्गैश्च उक्तात् प्रस्तुतादप्रस्तुताद्वाऽन्यो यथाक्रममप्रस्तुतः प्रस्तुतो वाऽर्थो बोध्यते सा संक्षेपोक्तिस्वरूपत्वात्, 'समासेन संक्षेपेण उक्तिः' इति व्युत्पत्त्या समासोक्तिः कथिता। 'संक्षेपश्च एकस्य वचनेनोभयप्रतिपत्तिरिति। आदर्शे, अप्रस्तुताद्वाच्यात् प्रस्तुतस्य गम्यत्वे समासोक्तिरित्यभिहितम्, नव्यास्तु तद्वैपरीत्येन प्रस्तुतादप्रस्तुतप्रतीतौ समासोक्तिः अप्रस्तुतात् प्रस्तुतप्रतीतावप्रस्तुतप्रशंसेत्याहुः। वाच्ये प्रस्तुतेऽप्रस्तुतव्यवहारसमारोपः समासोक्तिरिति विश्वनाथादयः। वस्तुतस्तु उभयत्रापि समासोक्तेरेवाभ्युपगमस्यौचित्यात्तदनुगुणमेव प्राचीनरीत्या लक्षणमुक्तमस्माभिः। उदाहरणं क्रमेण,—

"श्रुतिसुखभ्रमरस्वनगीतयः
कुसुमकोमलदन्तरुचो बभुः।
उपवनान्तलताः पवनाहतैः
किसलयैः सलयैरिव पाणिभिः"॥ (५२) रघु०।

---

(५२) श्रुतीति। श्रुतिसुखाः श्रवणानन्दिनः भ्रमराणां स्वना गुञ्जनानि गीतय इव यासां ताः तथा कुसुमानि कोमला दन्तानां



CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अत्र विशेषणसाम्यात् कार्य्यसाम्याच्च प्रस्तुतादुपवनलता-रूपार्थादप्रस्तुतो नर्त्तकीरूपोऽर्थः प्रतीयते ।

चातकस्त्रिचतुरान् पयःकणान्
याचते जलधरं पिपासितः ।
सोऽपि पूरयति भूयसाम्भसा
चित्रमत्र महतामुदारता" ॥ (५४)

अत्र अप्रस्तुताच्चातकाज्जलधराच्च कार्य्यसाम्यात् प्रस्तुतो याचकः, उदाराशयो धनपतिश्च बोध्यते ।

**अप्रस्तुतप्रशंसा स्यादप्रक्रान्तेषु या स्तुतिः ।**
**तन्मुखेन प्रस्तुतस्य निन्दा यत्र प्रतीयते" ॥**

दण्डी० ।

अप्रक्रान्तेषु, अप्रस्तुतेषु अप्रस्तुतानामित्यर्थः, षष्ठ्यर्थे सप्तमी । यथा,—

"पादाहतं यदुत्थाय मूर्द्धानमधिरोहति ।
स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः" ॥ (५५) शिशुपा०

---

रुचः प्रभा यासां तथाविधाः उपवनान्तलताः पवनाहतैः वायुकम्पितैः किसलयैः नवपल्लवैः लयैः लयाख्यसङ्गीताङ्गहस्तचालनसाहतैः पाणिभिः भुजैरिव बभुः शोभन्ते स्म ।

(५४) चातक इति । चातकः पक्षिविशेषः पिपासितः सन् जलधरं त्रिचतुरान् पयःकणान् वारिबिन्दून् याचते प्रार्थयते, सोऽपि जलधरोऽपि भूयसा प्रचुरेण अम्भसा पूरयति तत्प्रार्थनमिति शेषः । अत्र जगति महतां जनानाम् उदारता वदान्यता चित्रम् आश्चर्य्यम् ।

(५५) पादाहतमिति । यत् पादाहतं चरणताडितं सत्

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अत्र अप्रस्तुतस्य रजसः प्रशंसामुखेन प्रस्तुतस्य अपमान-सहिष्णोर्निन्दा प्रतीयते। यथा वा,—

"सुखं जीवन्ति हरिणा वनेष्वपरसेविनः।
अन्नैरयत्नसुलभैस्तृणदर्भाङ्कुरादिभिः" ॥ (५६)

अत्र मृगाणां सुखजीवनस्याप्रस्तुतस्य प्रशंसया प्रस्तुतस्य राजानुवृत्तिजीवनस्य निन्दा प्रतीयते।

**"व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढ़िरन्यथा"।**

मम्मटः।

मुखे आपाततः, अन्यथा यथाक्रमं स्तुत्यां निन्दायां वा रूढ़िः पर्य्यवसानम्। स्तुतिपर्य्यवसायिनी निन्दा निन्दापर्य्यवसायिनी स्तुतिश्च व्याजस्तुतिरिति फलितम्। निन्दायाः स्तुतिरूपेण पर्य्यवसाने व्याजेन स्तुतिरिति व्याजस्तुतिः, स्तुतेर्निन्दारूपेण पर्य्यवसाने व्याजरूपा स्तुतिः। क्रमेण यथा,—

त्यक्त्वा राज्यं गिरमनुसरन् स्त्रीवशान्मूढ़बुद्धे-
राज्ञो भ्रान्त्वा गहनविपिने हारयन् मुग्धकान्ताम्।

---

पादाहन्तुरिति शेषः मूर्द्धानं मस्तकम् अधिरोहति आक्रामति, तत् रजः अपमाने शत्रुपराभवेऽपि स्वस्थात् देहिनः वरं मनाक् प्रियम्।

(५६) सुखमिति। वनेषु अपरसेविनः परसेवनवर्जिताः हरिणा अयत्नसुलभैः अनायासलभ्यैः तृणदर्भाङ्कुरादिभिः सुखं जीवन्ति।

(५७) त्यक्त्वेति। रामं प्रति कस्यचिद् व्याजस्तुतिः। हे राम! स्त्रीवशात् स्त्रैणत्वात् मूढ़बुद्धेः दुर्मतेरित्यर्थः राज्ञः दशरथस्येत्यर्थः गिरं त्वं वनं गच्छेति वाचम् अनुसरन् प्रतिपालयन् राज्यं त्यक्त्वा गहन-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

सख्यं बद्धा कपिभिरसमं लङ्घयन् कीर्त्तिमग्र्यां
पूर्वेषां वो विलयमनयो हेमलङ्कां किमेतत्॥ (५९)

अत्र स्त्रीवश्यवर्त्तिनो मूढ़धियो नरपतेर्वचनप्रतिपालनम्, पूर्वेषां सगरसुतानां कीर्त्तिलङ्घनादिकञ्चापाततो निन्देव प्रतिभाति, चरमे तु पितुः प्रतिज्ञा संरचिता, दुस्तरं तोयनिधिमुत्तीर्य्य दुःसहप्रतापो वनितापहारी दशाननो विजितः समूलमुन्मूलितश्चेत्यहो दुष्करं कृतमिति सर्वमेव स्तुत्यां पर्य्यवस्यतीति निन्दायाः स्तुतिरूपेण पर्य्यवसाने व्याजस्तुतिः।

युक्तं तवेतत् रघुवंशभूपते!
सतां हि सख्युः परिपालनं व्रतम्।
इतः स्तुतिः का जगदीश! निर्मला
भवान् यदर्थं न्यवधीन्निरागसम्॥ (५८)

---

विपिने निविड़ारण्ये मुग्धकान्तां सुन्दरीं रमणीं हारयन् राक्षसेनेति शेषः कपिभिः वानरैः असमम् अतुल्यम् सख्यं बद्धा कृत्वा वः युष्माकं पूर्वेषां पूर्वपुरुषाणां सगरवंशीयानामित्यर्थः अग्र्यां महतीं कीर्त्तिं सागरमित्यर्थः लङ्घयन् सेतुबन्धनेन तरन्नित्यर्थः हेमलङ्कां स्वर्णलङ्कापुरीं विलयं विध्वंसम् अनयः प्रापितवानसि, किमेतत्?

(५८) युक्तमिति। हे रघुवंशभूपते! तव एतत् सुग्रीवप्रीतिकरणमिति भावः युक्तम् उचितं हि यतः सतां साधूनां सख्युः परिपालनं परिरक्षणं व्रतम् अवश्यकर्त्तव्यमित्यर्थः, हे जगदीश! इतः अस्मात् परं निर्मला विशुद्धा स्तुतिः का? यदर्थं यस्याः स्तुत्याः कृते इत्यर्थः भवान् निरागसं निरपराधं मामिति शेषः न्यवधीत् निहतवान्। रामं प्रति बालिराजस्योक्तिः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अत्र प्रियबन्धोः संरक्षणमुचितमेवेति तव सुग्रीवस-
हायत्वं युक्तमेवेत्यापाततः स्तुतिरपि, मित्रकार्य्यार्थं निर-
पराधस्य जीर्णकलेवरस्य शाखामृगस्य मे हननं सर्वथा
गर्हितमेवेति चरमे निन्दायां पर्य्यवस्यतीति स्तुतेर्नि-
न्दायां पर्य्यवसाने व्याजस्तुतिः।

"प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम्।
निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते"॥

विश्वनाथः।

क्रमेण यथा,—

"यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये! तव मुखच्छायानुकारी शशी।
येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते"॥(५९)

---

(५९) यदिति। हे प्रिये! तव नेत्रयोः समाना कान्तिर्यस्य
तादृशं यत् इन्दीवरं नीलोत्पलम् इन्दीवरञ्च नीलेऽस्मिन्नित्यमरः।
तत् सलिले जले मग्नं विनष्टम्। तव मुखच्छायानुकारी त्वन्मुख-
सदृशकान्तिरित्यर्थः शशी चन्द्रः मेघैरन्तरितः तिरोहितः, येऽपि तव
गमनानुकारिणी गतिर्येषां तादृशाः राजहंसाः, तेऽपि गताः
मानसमिति शेषः वर्षासु हंसानां मानसगमनस्य कविसमयसिद्धत्वा-
दिति भावः। अतः दैवेन प्रतिकूलविधिनेत्यर्थः तव सादृश्येन यः
विनोदः कथमपि चित्तसन्तोषः तन्मात्रमपि न क्षम्यते न सह्यते।
सीता-सादृश्यदर्शनादयो हि विरहिणां विनोदा इति शास्त्रात्।
सुहृत्य रामस्य तां प्रत्युक्तिः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"मुखं यदि किमिन्दुना यदि चलाञ्चले लोचने
किमुत्पलकदम्बकैर्यदि तरङ्गभङ्गी भ्रुवौ।
किमात्मभवधन्वना यदि सुसंयताः कुन्तलाः
किमम्बुवहडम्बरैर्यदि तनूरियं किं श्रिया"॥ (६०)

वी० च०।

प्रथमे प्रसिद्धानामुपमावस्तूनामिन्दीवरादीनामुपमेयत्वप्रकल्पनम्, द्वितीये इन्दुप्रभृतीनां निष्फलत्वकथनम्।

'शब्दैः स्वभावादेकार्थैः श्लेषोऽनेकार्थवाचनम्'।

विश्वनाथः।

---

(६०) मुखमिति। यदि मुखं तस्या इति शेषः विद्यते इति शेषः तदा इन्दुना चन्द्रेण किम्? न किमपि प्रयोजनमित्यर्थः। तन्मुखेनैव इन्दुकार्य्यस्य समाधानादिति भावः। यदि चले अञ्चले प्रान्तभागौ अपाङ्गावित्यर्थः ययोः तादृशे लोचने विद्येते तस्या इति शेषः, तदा उत्पलानां नीलोत्पलानां कदम्बकैः समूहैः किम्? न किमपि प्रयोजनमित्यर्थः। तत् कार्य्यस्य लोचनाभ्यामेव समाधानादिति भावः। यदि तरङ्गस्येव भङ्गिःकौटिल्यं ययोः तादृश्यौ भ्रुवौ विद्येते तस्या इति शेषः, तदा आत्मभवस्य कामस्य धन्वना धनुषा किम्? नैव प्रयोजनमस्तीत्यर्थः कामकार्मुककार्य्यस्य तद्भ्रुयुगलाभ्यामेव समाधानादिति भावः। यदि सुसंयताः सुष्ठु बद्धाः कुन्तलाः केशाः विद्यन्ते तस्या इति शेषः तदा अम्बुवहानां मेघानां डम्बरैः विस्तरैः किम् नैव प्रयोजनमस्तीत्यर्थः अत्रापि पूर्ववदेव हेतुर्द्रष्टव्यः। यदि इयं तनुः शरीरं विद्यते तस्या इति शेषः तदा श्रिया लक्ष्म्या किम्? नैव प्रयोजनमस्तीत्यर्थः अत्रापि पूर्ववदेव हेतुर्बोध्यः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

स्वभावादेकार्थैरिति शब्दश्लेषात्, वाचनमिति च ध्वनेर्व्यवच्छेदः यथा,—

"खलस्य कण्टकस्येव द्विविधैव प्रतिक्रिया।
उपानहा वक्त्रभङ्गो दूरतो वा विवर्जनम्॥ (६१)

"सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम्"।

यथा,—

"पुरोपनीतं नृप! रामणीयकं
द्विजातिशेषेण यदेतदन्धसा।
तदद्य ते वन्यफलाशिनः पर-
म्परैति कार्श्यं यशसा समं वपुः" ॥ (६२) भार०

अत्र वपुर्यशसोभयमपि द्योत्यते इति सहार्थबलाद्-बोध्यते।

---

(६१) खलस्येति। खलस्य दुर्जनस्य तथा कण्टकस्य द्विविधा एव प्रतिक्रिया प्रतीकारः, उपानहा चर्मपादुकया वक्त्रभङ्गः मुखभङ्गः, वा दूरतः विवर्जनं परिहारः संसर्गपरित्याग इत्यर्थः कर्त्तव्यमिति शेषः। वक्त्रशब्दः स्वभावादेकार्थ एव, अत्र तु खलस्य वक्त्रं वदनं कण्टकस्य वक्त्रम् अग्रभाग इति अनेकार्थयोः प्रतिपादनं बोध्यम्।

(६२) पुरोपनीतमिति। युधिष्ठिरं द्वैतवनवासिनं प्रति द्रौपद्या उक्तिः। हे नृप! राजन्! यदेतत् तव वपुः शरीरं पुरा पूर्वं द्वि-जातिशेषेण ब्राह्मणभुक्तावशिष्टेन अन्धसा अन्नेन रामणीयकं रमणीय-त्वम् उपनीतं गमितं, तद् वपुः अद्य वन्यफलाशिनः वनफलभोजिनः ते तव यशसा समं सह परम् अत्यर्थं कार्श्यं क्षयमित्यर्थः परैति प्राप्नोति।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्" ।

विश्वनाथः ।

वाक्यस्य पदार्थस्य वा हेतुरूपेणोक्तौ काव्यलिङ्गम् ।

यथा,—

"रे हस्त! दक्षिण मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम् ।
रामस्य गात्रमसि दुर्भरगर्भखिन्न-
सीताप्रवासनपटोः करुणा कुतस्ते?" ॥ (६३) (उ०च०)

अत्र करुणाया अभावे 'रामस्य गात्रमसि' इति वाक्यं, 'दुर्भरगर्भखिन्नसीताप्रवासनपटोः' इति पदार्थश्च हेतुः ।

"विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते" ।

विश्वनाथः ।

यथा,—

"अपमेघोदयं वर्षमदृष्टकुसुमं फलम् ।
अतर्कितोपपन्नं वो दर्शनं प्रतिभाति मे" ॥ (६४) (कु०स०)

---

(६३) रे हस्तेति हे दक्षिणहस्त! मृतस्य द्विजस्य शिशोः जीवातवे जीवनाय शूद्रमुनौ कृपाणम् विसृज शूद्रमुनिं प्रहरेत्यर्थः । कथमहमीदृशमकार्य्यं करवाणीत्याशङ्क्य तव अकरणीयं नास्तीति प्रबोध्याह रामस्येति दुर्वहेण वोढुमशक्येन गर्भेण खिन्ना क्लान्ता या सीताः तस्याः प्रवासने निर्वासने पटोः दक्षस्य रामस्य गात्रम् अङ्गमसि, ते तव करुणा कुतः?

(६४) अपमेघोदयमिति । वः युष्माकं अतर्कितोपपन्नम् अभावितोपस्थितं दर्शनं मे मम अपगतो मेघानामुदयो यत्र तादृशं वर्षं तथा न दृष्टं कुसुमं यस्य तथाभूतं फलं प्रतिभाति ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अत्र मेघोदयकुसुमरूपकारणयोरभावेऽपि वर्षफलरूप-कार्ययोरभिधानम्।

**'सति हेतौ फलाभावे विशेषोक्तिस्' त्रिधा च सा।**
**उक्त्यनुक्त्योर्निमित्तस्याप्यचिन्त्यत्वे च कुत्रचित्॥**

उक्तनिमित्ता अनुक्तनिमित्ता अचिन्त्यनिमित्ता चेति सा त्रिधा। क्रमेण यथा,—

"धनिनोऽपि निरुन्मदा युवानोऽपि न चञ्चलाः।
प्रभवोऽप्यप्रमत्तास्ते महामहिमशालिनः॥ (६५)

अत्र धनादिरूपहेतुसत्त्वेऽपि उन्मादादिरूपफला-भावः महामहिमशालित्वञ्चात्र निमित्तमुक्तम्। अत्रैव चतुर्थपादे "कियन्तः सन्ति भूतले" इति पाठे निमित्त-मनुक्तं भवति,—

"स एकस्त्रीणि जयति जगन्ति कुसुमायुधः।
हरतापि तनुं यस्य शम्भुना न बलं हृतम्॥ (६६)

अत्र तनुहरणेऽपि बलाहरणे निमित्तमचिन्त्यम्।

---

(६५) धनिन इति। ते जनाः धनिनोऽपि धनवन्तोऽपि निरु-न्मादाः उन्मादरहिताः अप्रचण्डा इत्यर्थः युवानोऽपि तरुणा अपि न चञ्चलाः चापल्यरहिता इत्यर्थः। प्रभवः निग्रहानुग्रहसमर्था अपि अप्रमत्ताः चपरहिता इत्यर्थः, यतः महामहिमशालिनः महा-प्रभवन्त इत्यर्थः।

(६६) स इति। स प्रसिद्धः कुसुमायुधः एकः एकाकीत्यर्थः त्रीणि जगन्ति जयति, शम्भुना हरेण तनुम् अङ्गं हरतापि दहतापि यस्य कुसुमायुधस्य बलं सामर्थ्यं न हृतम्।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः" ।

मम्मटः ।

वस्तुतोऽविरोधेऽपि विरुद्धयोरिव धर्मयोर्यदभिधानं स विरोधः, अयमेव विरोधाभास इत्यप्युच्यते। व्यधिकरणयोरिव धर्मयोः सामान्याधिकरण्येन निर्देशो विरोधः। धर्मश्चात्र जातिगुणक्रियाद्रव्यरूपः। उदाहरणम्,—

"अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः
स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव" ॥ (६७) (रघुवं०)

"जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः।
जगदादिरनादिस्त्वं जगदीशो निरीश्वरः" ॥ (६८) कु० स०

प्रथमे भगवतः प्रभावस्यातिशयित्वादापाततः प्रतीयमानस्य विरोधस्य समाधानम्, द्वितीये नञ्तत्पुरुषसमासे विरोधः, बहुव्रीहिणा परिहारः।

---

(६७) अजस्येति। देवानां विष्णुं प्रति स्तुतिः। हे देव! को जनः अजस्य जन्मरहितस्य अथच जन्म गृह्णतः जायमानस्येत्यर्थः निरीहस्य निश्चेष्टस्य अथच हता द्विषः शत्रवो येन तथोक्तस्य स्वपतः निद्राणस्य अथच जागरूकस्य तव याथार्थ्यं तत्त्वं वेद जानाति? न कोऽपीत्यर्थः।

(६८) जगदिति। ब्रह्माणं प्रति देवानां स्तुतिः हे देव! त्वं जगतां योनिः प्रभवः, स्वयम् अयोनिः नास्ति योनिः प्रभवो यस्य तथाभूतः। जगताम् अन्तयति अन्तः नाशक इत्यर्थः नास्ति अन्तको यस्य स निरन्तकः स्वयं नाशरहित इत्यर्थः। त्वं जगताम् आदिः मूलकारणं स्वयं नास्ति आदिर्यस्य तथोक्तः। जगताम् ईशः स्वामी, स्वयं निरीश्वरः स्वामिरहित इत्यर्थः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"गुणक्रिये वा यत् स्यातां विरुद्धे हेतुकार्य्ययोः।
यद्वारब्धस्य वैफल्यमनर्थस्य च सम्भवः।
विरूपयोः सङ्घटना या च तद्विषमं मतम्*"॥

विश्वनाथः।

यत्र, कारणगुण एकः कार्य्यगुणस्तद्विपरीतः, क्रिया वा द्वयोर्विरुद्धा, यत्र न केवलमारब्धस्य वैफल्यमनर्थोपपत्तिश्च, यद्वा विषमयोर्मिलनञ्च भवेत्। तदेवं चतुर्धा विषमम्, क्रमेण यथा,—

"सद्यः करस्पर्शमवाप्य चित्रं
रणे रणे यस्य कृपाणलेखा।
तमालनीला शरदिन्दुपाण्डु
यशस्त्रिलोक्याभरणं प्रसूते"॥ (६८)

अत्र कारणरूपासिलतायाः 'कारणगुणाः कार्य्यगुणमारभन्ते' इति स्थितेर्विरुद्धा शुक्लयशस उत्पत्तिः।

---

* यत्र गुणादेरेकाश्रयवृत्तित्वेन परस्परविरोधः, तत्रैव विरोधालङ्कारो भवितुमर्हति। यत्र पुनः कार्य्यकारणयोर्भिन्नाश्रयवृत्तित्वेन परस्परविरुद्धत्वं तत्रैव विषमस्यावसर इत्यनयोर्भेदः।

---

(६८) सद्य इति। तमालनीला कृपाणलेखा रणे रणे प्रतिरणं यस्य करस्पर्शमवाप्य प्राप्य करे स्थित्वेत्यर्थः शरदिन्दुपाण्डु शरच्चन्द्रशुभ्रं त्रिलोक्याभरणं त्रिलोक्या अलङ्कारभूतं यशः सद्यः प्रसूते तनोतीत्यर्थः चित्रम् आश्चर्य्यम्।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"आनन्दममन्दमिमं कुवलयदललोचने ! ददासि त्वम् ।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे" ॥ (७०)

अत्र त्वमानन्दं ददासि तज्जनितो विरहस्तु तापयतितरामिति हेतुकार्य्ययोर्विरुद्धा क्रिया ।

"अयं रत्नाकरोऽम्भोधिरित्यसेवि धनाशया ।
धनं दूरेऽस्तु वदनमपूरि क्षारवारिभिः ॥ (७१)

अत्र न केवलं काङ्क्षितधनलाभो माभूत् प्रत्युत क्षारवारिभिर्वदनपूरणरूपानर्थपातः ।

"अनृताङ्गिरं न गदसीति जगति पटहैर्विघुष्यसे ।
निन्द्यमथ च हरिमर्चयतस्तव कर्मणैव विकसत्यसत्यता" ॥
(७२) माघः ।

अत्र सत्यप्रख्यापनासत्यसमाचरणयोर्विरूपयोः सङ्घटना ।

---

(७०) आनन्दमिति । हे कुवलयदललोचने ! नीलोत्पलदलाक्षि ! त्वम् इमम् अमन्दं महान्तमित्यर्थः आनन्दं ददासि, त्वयैव जनितः उत्पादितः विरहस्तु मे मम शरीरं तापयतितराम् अतिशयेन तापयतीत्यर्थः ।

(७१) अयमिति । अयम् अम्भोधिः समुद्रः रत्नानामाकर इति बुद्ध्येति शेषः धनाशया असेवि सेवितः मयेति शेषः । धनं दूरेऽस्तु तिष्ठतु, प्रत्युत क्षारवारिभिः लवणजलैः वदनम् अपूरि परिपूरितम् ।

(७२) अनृतामिति । युधिष्ठिरं प्रति शिशुपालस्योक्तिः । हे धर्मराज ! अनृताम् असत्यां गिरं वाचं न गदसि न कथयसि इति जगति पटहैः वाद्यभेदैः विघुष्यसे कीर्त्त्यसे अथ च निन्द्यं हरिं कृष्णम् अर्चयत स्तव कर्मणैव निन्दनीयार्चनरूपेणेत्यर्थः असत्यता अनृतवादिता विकसति प्रकाशते ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"कार्य्यकारणयोर्भिन्नदेशतायामसङ्गतिः"।

विश्वनाथः।

यथा,—

"जस्सेअ वणो तस्सेअ वेअणा भणइ जणो तं अलिअं।
दन्तक्खअं कबोले बहूए वेअणा सवत्तीणम्" ॥ (७३)

अत्र एकस्याः कपोले दशनक्षतमपरस्या वेदनेति कार्य्यकारणयोर्भिन्नाश्रयत्वम्।

"परं परं प्रति यदा पूर्वपूर्वस्य हेतुता।
तदा कारणमाला स्याद्" दर्पणे समुदीरिता ॥

यथा,—

"जितेन्द्रियत्वं विनयस्य कारणं
गुणप्रकर्षो विनयादवाप्यते।
गुणप्रकर्षेण जनोऽनुरज्यते
जनानुरागप्रभवा हि सम्पदः" ॥ (७४)

---

(७३) जस्सेअ इति।
यस्यैव व्रणस्तस्यैव वेदना भणति जनस्तदलीकम्।
दन्तक्षतं कपोले वध्वा वेदना सपत्नीनाम् ॥

(७४) जितेन्द्रियत्वमिति। जितेन्द्रियत्वम् इन्द्रियदमनं विनयस्य शिष्टाचारस्य कारणं हेतुः विनयात् गुणप्रकर्षः गुणानामुत्कर्षः अवाप्यते लभ्यते। गुणप्रकर्षेण जनः लोकः अनुरज्यते सम्पदः जनानाम्



CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"उत्तरोत्तरमुत्कर्षो भवेत् सारः परावधिः

(७५) मम्मटः।

"राज्ये सारं वसुधा वसुधायां पुरं पुरे सौधम्।
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम्"। (७६)

"पूर्वं पूर्वं प्रति विशेषणत्वेन परं परम्।
स्थाप्यतेऽपोह्यते वा चेत् स्यात्तदैकावली द्विधा"॥

विश्वनाथः।

पूर्वं पूर्वं प्रति यथोत्तरस्य वस्तुनो विशेषणत्वेन यत् स्थापनं निषेधो वा सम्भवति सा द्विधा बुधैरेकावली कथ्यते। क्रमेणोदाहरणम्,—

"सरो विकसिताम्भोजमम्भोजं भृङ्गसङ्गतम्।
भृङ्गा यत्र ससङ्गीताः सङ्गीतं मधुवर्षि च"॥ (७७)

---

अनुरागः प्रभवो यासां तथाविधा हि लोकानुरागेणैव सम्पदो लभ्यन्त इति भावः।

(७५) उत्तरोत्तरमिति। उत्तरोत्तरम् उत्कर्षः परः श्रेष्ठः अवधिः यस्य तथाभूतः सारः तदाख्यालङ्कारो भवेत्।

(७६) राज्ये इति। राज्ये राज्यमध्ये वसुधा लोकवासभूता महोत्कर्षः सारं श्रेष्ठत्वर्यः। वसुधायां पुरं नगरं पुरे नगरे सौधं हर्म्यं सौधे हर्म्ये तल्पं शय्या, तल्पे अनङ्गसर्वस्वं वराङ्गना उत्तमा कान्ता सारमित्यनेन सर्वत्र सम्बन्धः।

(७७) सर इति। यत्र सरः सरोवरं विकसितानि अम्भोजानि पद्मानि यस्मिन् तत् तथोक्तम्। अम्भोजं भृङ्गैः सङ्गतं युक्तं भृङ्गाः

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अत्र सरसीऽम्भोजं तस्य भृङ्गम् इत्यादि क्रमेण विशेषणं विधीयते।

"न तज्जलं यन्न सुचारु पङ्कजं
न पङ्कजं तद्यदलीनषट्पदम्।
न षट्पदोऽसौ न जुगुञ्ज यः कलं
न गुञ्जितं तन्न जहार यन्मनः"॥ (७८) भट्टिः।

अत्र क्रमेण पूर्वपूर्वस्य निषेधः।

## "दण्डापूपिकयाऽन्यार्थागमोऽर्थापत्तिरिष्यते"।

मूषिकेण दण्डो भक्षित इत्यनेन तत्सहचरितमपूप-भक्षणमर्थादायातं भवतीति न्यायो दण्डापूपिका तया-ऽर्थान्तरबोधनमर्थापत्तिः। यथा,—

"विललाप स बाष्पगद्गद सहजामप्यपहाय धीरताम्।

---

ससङ्गीताः गुञ्जनकारिणः। सङ्गीतं गुञ्जनञ्च मधुरमपि च अतिमधुर-मित्यर्थः।

(७८) नेति। तत् जलं न आसीदिति शेषः यत् सुचारूणि पङ्कजानि यस्मिन् तथोक्तम्। तत् पङ्कजं पद्मं न यत् नलीनाः षट्पदा भ्रमरा यत्र तादृशम्। असौ षट्पदो भ्रमरो न यः कलं मधुरास्फुटं न जुगुञ्ज। तत् गुञ्जितं गुञ्जनं न, यत् मनः न जहार श्रोतृणामिति शेषः।

(७९) इन्दुमतीविरहे अजस्य विलापं वर्णयति विललापेति। सः अजः सहजां स्वाभाविकीमपि धीरताम् अपहाय बाष्पगद्गदं

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु" ॥ (७८)

रघुवंशम् ।

अतिकठिनं लोहमपि तापेन गलितं भवतीति तद-पेक्षयाऽतिसुकुमारस्य मनुष्यहृदयस्य गलनं सुतरामाया-तीत्यर्थापत्तिः ।

इति अलङ्कारविवेको नाम अष्टमशिखा ।

---

विललाप तथाहि अभितप्तम् अयोऽपि लौहमपि मार्दवं भजते शरीरिषु कैव कथा ? न कापीत्यर्थः ।

इति अष्टमशिखा ।

इति वि, ए, उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता काव्यदीपिकाव्याख्या समाप्ता ।

---

समाप्तश्चायं ग्रन्थः ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

# KAVYADIPIKA

A

## MANUAL OF SANSKRIT RHETORIC

INTENDED FOR, AND SUITED TO THE CAPACITY OF, THE UNIVERSITY STUDENTS

WITH

A SHORT ACCOUNT, IN ENGLISH, OF THE, RISE PROGRESS AND DECLINE OF SANSKRIT POETRY.

BY

KANTI CHANDRA VIDYARATNA.

EDITED WITH A FULL COMMENTARY

BY

*PANDIT JIBANANDA VIDYASAGARA, B. A.*
*Superintendent Free Sanskrit College, Calcutta.*

SECOND EDITION.




CALCUTTA:
PRINTED AT THE SARASWATI PRESS.
1886.

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

# SANSKRIT POETRY.

"Poetry," says Hazlitt, "is the language of the imagination and the passions. It relates to whatever gives immediate pleasure or pain to the human mind". Its existence may, therefore, be co-eval with the primary institution of society, and even with the first creation of man. His earliest efforts would indeed, consist of unconnected and separate pieces without any systematic arrangement. First of all, the marvellous and gigantic power of the elements, and the splendid appearance of the heavenly bodies,—the visible symbols of the invisible and infinite, would strike his mind. The exploits and prowess of the 'favored few,' shining pre-eminently over their fellow-brethren, and dazzling their eyes by a charming brilliancy, would not fail to produce their effect. Hence would, naturally, spring two sorts of poetry, the first consisting of hymns addressed to, and singing the glory and power of, the visible deities, and through them extolling the mysterious potency of the Omnipotent : and the second comprehending short ballads and songs, celebrating the exploits and adventures of some favorite hero. It would be long, before systematic and continued pieces would be originated. System is the work of time, the production of mature judgment and consummate genius.

The Greeks had got hymns and ballads before the immortal father of their poesy touched his harp. His mighty and grasping genius could hardly remain content with a few poor scraps and scattered patches, which had satisfied his predecessors. He, at once, laid and established his claim over the vast empire of poetry, and gave it a poetical organization of his own..

The Romans, under the Republic, had no high aspirations in this department of literature. They felt not the delicate

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

charms of poetry,—the sweet phrensy of fancy. They were emphatically the children of Mars, and bore too manly a spirit to stoop before the feminine Muses. They boasted of their stern discipline and rigid martial spirit, as the characteristic of a sovereign people, and hated the softer arts as belonging to the subject races and the effeminate barbarians. Poetry, in consequence, languished in their age, and never grew with vigor and luxuriance. It was not till the Augustan era, that this elegant art flourished in Rome. It is a delicate plant that grows only in the congenial warmth of imagination; it cannot bear the blighting heat of stern utility and rigid discipline.

The Hindus have been pre-eminently celebrated for the originality and antiquity of their poetry. Their chief defect lies in the almost absolute want of any historical records properly so called. Whatever information can be gleaned of their past history is through the gorgeous and delusive coloring of poetry, or through their intercourse with other nations. It was not till the invasion of Alexander, that any knowledge of them could be had from foreign sources. We must then look to the country itself to gain any information of the times anterior to the Greek invasion, and, in the absence, in general, of external evidence, we must place our chief reliance on the internal testimony to be extracted from the living monuments of our ancestors,—the works they have left us as an inexhaustible and priceless patrimony—the everlasting memorials of their divine genius. The vast field yet remains unexplored, or only partially explored, presenting, indeed, at the first sight, a desolate and dark appearance, but containing rich mines of gold in the interior; and although the indefatigable zeal and the indomitable perseverance of some master-minds in Europe have, to some extent, smoothed the way, the deep recesses of Hindu history lie yet in darkness. A Niebuhr of Indian history is yet to be born.

I do not presume at all to throw any light on Hindu history. It is beyond my capacity and acquirements. I will only attempt, in the following pages, to trace the changes, Sanskrit Poetry underwent, from its rude structure in the

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

Vedas to the highest refinements it attained to, and its decline in latter days.

The hymns of the Rig Veda, the only portion of the sacred Scriptures which can be classed with poetry, are principally addressed to India, 'the deity of the visible firmament,' 'the God of lightning and rain', and Agni 'the God of fire', They are the oldest monuments of Hindu genius, and the earliest specimens of their poetry. The poetry, however, of the hymns, is not so simple as could be expected in so early a period of Society, "The poetry of the Rig Veda is remarkably deficient in that simplicity and natural pathos or sublimity which we usually look for in the songs of an early period of civiliz-ation." *

Next in succession comes the Ramayana of Valmiki, the earliest and the greatest epic in Sanskrit. Valmiki is said to be the Adikavi or primeval poet, and the inventor of *Sloka*, (Sanskrit verse) so called from the occasion of its birth, the *compassion* which filled the heart of the sage at the sight of a pair of cranes, one of which had been cruelly pierced by the arrow of a fowler. The simplicity of the style, the sweet and natural pathos pervading throughout and the *prolixity* (if I may so use the term ) in the structure, are quite in keeping with its early date. †

The Mahabharata of Vedavyàsa contains passages full of pathos and grandeur. The descriptions in the Sabha Parva, and the pathetic delineations in the Stri Parva are genuine touches of poetry. But although the style is, in general, characterized by simplicity, and we meet with occasional prolixity in the structure, we have not here invariably the smooth and flowing strain of the Ramayana, nor always its simple, natural, yet

---

* Ed. B. Cowell. Elphinstone's History of India.

† The Upanishads and the Puranas, including the Bhagavata, though they, now and then, glow with poetic sentiments, cannot properly be classed with poetry. I am not in a position to fix their dates in the progress of Sanskrit literature.

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

vivid style. The work of Valmíki is like a garden of nature, where she shines in simple and naked beauty, and sports wild at her pleasure ; while in the Mahabharata we have, now and then, a sprinkling of artificial tinge,—a touch of later refinements ; and the style bears evident proofs of an advanced stage in the language.

But it was in the hands of Kalidasa and Bhavábhuti, that Sanskrit poetry attained to its highest refinements, consistent with purity, and without the extravagant coloring imparted to it by later writers. But as we are acquainted with Bhavabhuti as a dramatic writer, and as I shall speak of Sanskrit drama separately, I postpone noticing his poetry, till I come to treat of the subject of the Hindu theatre.

Kálidása is known to the world both as an epic and a dramatic poet. His style is pure, chaste and simple ; it has not, in the least, the laxity of the sacred poems, and though characterised by brevity, perspicuity runs through every vein of his poetry. His descriptions are always true to nature, his delineation of characters faithful to the minutest point ; his similes are every where appropriate, natural, beautiful. Nature yielded to him as a gentle bride, and ever remained faithful in his hands. The description of the ocean, of the forest scenery, and the hermitage of the sages therein, in the 13th Book of the Raghuvansa, when Rama returned home from Lanka ;—the parting scene of Lakshmana in the 14th, leaving Sita, the queen of Rama, alone and helpless in the wilderness, a prey to the howling beasts, and crying aloud like a frightened Kurari ;—the sudden and wonderful appearance, at midnight, of the goddess of Ayodhya, before Kusha sleeping in his apartment with doors all barred and closed, and her descriptions of deserted Ayodhya, graphically contrasted with her former glory and beauty ;—the most faithful delineation of the acts of the maidens of Bidarva, eager to feast their eyes with the sight of Aja in the 7th, and of those of Indraprastha, when Siva advanced through that capital in marriage procession in the 7th of Kumara ;—the discourse of S'iva in the disguise of an ascetic, and Párvati prac-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

tising hard austerities to gain his favor ;—and the vivid descriptions in the Meghadúta, are among the master-pieces in the Language.

Another rare quality characterizes his poetry. He could delineate, within the shortest compass imaginable, subjects which had occupied volumes in the hands of others, and yet would not leave out a single prominent fact in his descriptions. His epithets are always appropriate and full of meaning, and he seldom uses particles merely to fill up the verse.

The style of the Kiratarjuniya of Bharavi is classical and elaborate. It has not the simplicity of the Raghuvansa, nor its natural structure. The peculiar characteristic of Bharavi's writings is the great condensation of matter. Almost every line of his poetry may form the subject of an essay. The great work of Bharavi marks a new epoch in Sanskrit poetry. In his work, to a certain extent only, but to a greater degree, in the noble productions of the poets subsequent to him, we find a more ostentatious display of learning and ingenuity, than indication of genuine touches of true and simple poetry. They possessed great powers of description, but they knew not where and when to stop. Their descriptions and discourses are sometimes too long to attract the attention of the readers. Some of them carried their refinements too far, and to an extravagance quite beyond the region of true poetry.

The Bhattikavya is a work of great merit, both as an epic poem, and possessing great grammatical interest besides. The description of autumn, opening the second Book of his work is an excellent piece of poetry, and clearly proves that the author possessed great natural powers, and a high poetical genius. But unfortunately, his object was to teach *grammar* through poetry, and he was therefore often forced to sacrifice the latter at the stern and rigid altar of the former.

The Sisupalabadha of Magha is an exact prototype of the great work of Bharavi. His descriptions are often too long and tedious. That of Krishna's passage, from Dwaraka to Indraprastha, takes up the space of ten long books in his hands. But the copy surpasses the original in evincing greater

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

variety, learning and skill in the discourses and descriptions. The conference of Uddhava, Krishna and Balarama in the 2nd Book, and the quaint reproaches of Sisupala in the 15th, shew great artistic skill in the author, and are excellent pieces of their kind.

But it was in the hands of Sri Harsha in his Naishadha Charita, that refinements were carried to their utmost extravagance. His genius was too sharp to keep the tender graces of Poetry unhurt. His exaggerations knew no bounds—were checked by no rules. His horses were too ambitious to rest satisfied with the whole space of earth for their range; they must dry the ocean with the dust of their hoofs to have a wider scope for their course. The moon had the misfortune to part with a great portion of the bright matter of her orb for the formation of the face of Damayanti, by the great creator, and hence the dark spots in her disst. Such unnatural exaggerations abound in the great work of Sri Harsha. But his descriptions, arguments and discourses shew marks of a very sharp intellect, great genius, consummate skill, and most profound learning.

The Rághavapàndaviya of Kaviraja is a work of little merit, contains less poetry, and is noted only for its verbal ingenuity, all its slokas bearing a double sense throughout the poem.

Thus Sankrit poetry gradually degenerated into mere verbal quibbles and pompous bombastic trash.

The 'Sugared' pastoral songs of our 'honoy-tongued' Jayadeva are the only exceptions, and they are the only pieces of the kind in Sanskrit poetry. They flow in soft and liquid strain. They are, indeed, as the poet boasts, sweeter than nectar, softer than the softest feminine graces, and more musical than the harmonious tune of the *Vina*.

I purposely omitted to mention the name of the Nalodaya ascribed to Kalidasa. I need hardly remark, that as a poetical work, it is of litte merit, contains mere verbal ingenuity, and is not at all worthy the name of the greatest of Sanskrit bards. It is perhaps the work of a Kalidasa who lived long after his celebrated namesake.

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

Sanskrit poetry is very poor in prose productions. I shall barely mention the names of the only ones which can be classed with poetry. These are the Dasakumara Charita of Sri-Dandin, the Kadambari of Vana Bhatta and the Vashavadatta of Subandhu.

The dramatic literature of a country is important and interesting not only in a literary and philological point of view, but also as it throws light on the manners and customs of the people, on the state of religion and philosophy of the time, and in short, on the general history of the nation. "The objects," says Prof. Wilson "for which an ancient dialect may be studied are its philology and its literature, or the arts and sciences, the notion and manners, the history and belief, of the people by whom it was spoken. Particular branches of composition may be preferably cultivated for the due understanding of each of these subjects, but there is no one species which will be found to embrace so many purposes as the dramatic. The dialogue varies from simple to elaborate, from the conversation of ordinary life to the highest refinements of poetical taste. The illustrations are drawn from every known product of art, as well as every observable phenomenon of nature. The manners and feeling of the people are delineated living and breathing before us, and history and religion furnish the most imporant and interesting topics to the bard. Wherever therefore there exists a dramatic literature, it must be pre-eminently entitled to the attention of the philosopher as well as the philologist, of the man of general literary taste as well as the professional scholar."

The drama of the Hindus is original and their own; it is borrowed from no other nation ancient or modern. It belongs to that class of dramatic literature which modern European scholars have termed *Romantic*, in opposition to what has been styled *classical*. Schlegel remarks "the only specimen of their plays hitherto known to us is the delightful Sakuntala, which, notwithstanding the foreign coloring of its native climate, bears in its general structure such a striking resemblance to our own romantic drama, that we might be inclined to sus-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

pect, we owe this resemblance to the predilection for Shakespeare, entertained by the English translator Sir W. Jones, if his fidelity were not attested by other learned orientalists'.

The number of Sanskrit dramas, now extant, is indeed very small, when compared with the theatre of some other nations. But this is probably owing to the unfrequency of their representations, and to the neglect of this department of literature by the learned. "They seem to have been acted only on solemn and public occasions". *Numbers doubtless are lost, and only those of peculiar merit have come down to us. And "that the Hindu theatre is only partially represented by the surviving specimens, is proved by the fact, that one of the earliest of their plays, the Vikramorvasi of Kalidasa, refers to the sage Bharata as having analysed the dramatic art. The long lost *poetics* of the Hindu Aristotle in 34 chapters have been recently discovered and printed. Many plays must have been composed before a critic could have written so copiously on the theory."†

A peculiarity of the Hindu drama is the mixing of Prakrita dialects in the speeches of the inferior *dramatis personae*. This shews, that Sanskrit ceased to be the spoken language of the country before the rise of dramatic literature. I doubt, whether Sanskrit was ever the spoken dialect of the people of all India. India is not a country but a continent; and to expect a common dialect throughout this vast extent would be almost extravagant. As the descendants of the Aryas spread on all sides, their dialects, gradually and of necessity, changed, differing from the mother tongue and from each other. Hence sprang the various dialects in the different countries of India. They are all, however, the daughters of the same mother ( Sanskrit ), and bear a near family relation to each other. Sanskrit, however, continued to be the language of the learned and the higher classes, and like Latin in Europe during the middle ages, formed the medium for the productions of great minds in every department of learning.

Sanskrit dramatists are not shakled by the rigid and

---

* Wilson's Hindu Theatre. † E. B. Cowell.

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

artificial rules of the Greeks and the French, nor are they allowed the extravagance of the Chinese play-writers. They have little regard for the unities of time and place. As for the unity of action I do not clearly understand what is meant by it. "In the highest and proper signification " says Schlegel, "action is an activity dependent on the will of man. Its unity will consist in the direction towards a single end, and to its completeness belongs all that lies between the first determination and the execution of the deed." This idea of action does not apply to Hindu drama. To quote again the words of Schlegel, "What comes to pass through the principal characters, and proceeds with them, has frequently no more connection with a voluntary determination than a ship's striking on a rock in a storm'. If by unity of action' says Prof. Wilson, " be meant singleness of incident, they (Hindu dramatists) exhibit an equal disdain for such a restriction."

Another characteristic of our drama is, that we have no tragedies, that is, no dramatic composition ending tragically. Hindu dramas must, invariably and of necessity, have a happy end. The hero may encounter dreadful and serious calamities, he may suffer excruciating pangs of separation. he may wander from forest to forest, his head deranged his mind distracted in mad quest of his love ; but he must be crowned with success in the end. The tragical end of the hero is shocking to Hindu idea.---shocking to their tender feelings.

Though thus we have no tragedy at all, which forms an important branch of dramatic composition of many nations. ancient and modern, there is not wanting a great variety in this department of Sanskrit literature. There are ten kinds of Rùpakas properly so termed, and eighteen sorts of *Uparupakas*, the minor or inferior *Rupakas*. We have also moral plays as the Prabodha Chandrodaya, which are, however included in one or other of the former divisions.

I have mentioned before the numerical paucity of the Hindu dramas. To each of the two greatest masters of the art Kalidasa and Bhavabhuti are ascribed only three pieces. We have indeed, no Antiphanes whose fertile genius could produce three

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

hundred and sixty five comedies, nor a giant Lope de Vega, the incredible number of whose dramatic compositions astounds our ears ; and the lightning flash of whose genius could extend to a thousand lines, while walking in his garden. I am quite in the dark about the merit of these wonderful productions but of this, I am sure, that Sanskrit drama loses little by the smallness of the number of works in this department of poetry. Its quality fully compensates for its quantity. Moreover, we have in Kalidasa combined the greatest epic and the greatest dramatic genius in the language, an excellence which no other poet, in any nation, as far I am aware, has ever been endowed with.

Many of the earliest Sanskrit dramas are certainly lost. Tht oldest specimen extantof the Hindu theatre is the Mrichhakatika attributed to the royal poet Sudraka ( शूद्रक ) whom trandition places in the first century before Christ. That the work is of considerable antiquity, is proved by internal evidence, and by the structure of the style which is characterized by the simplicity of an early age, and has not the elaborate polish of later times.

Next we come to Kalidasa, the prince of Sanskrit bards to whose immortal genius are ascribed three dramatic pieces. Ist The Abhijnana Sakuntala, the greatest, sweetest and finest drama in the language. 2nd The Vikramorvasi, which excels in poetic and visionary charm, reminding us of the fairy scenes of Shakespeare in his Midsummer Night's Dream. 3d The Malavikagnimitra. That the first two are the genuine productions of the same hand, there is no reason to doubt, "The subject of each is taken from heroic, mythology and a royal demigod and a nymph of more than human mould are the hero and heroine of either ; there is the same vivacity of description and tenderness of feeling in both ; the like delicate beauty in the thoughts and extreme elegance in the style". * The Malavikagnimitra is a work of inferior merit. There is doubt whether it is the production of the favored child of Saraswati.

* Wilson's Hiudu Theatre.

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

"The internal evidence" says Prof. Wilson "is adverse to the drama's being the work of the author of Sakuntala and Vikramorvasi. There is neither the same melody in the verse, nor fancy in the thoughts."

Bhavabhùti is second only to Kalidasa in this department of poetry. To him also are attributed three dramas.=The Uttararamacharita, the Malati Madhava, and the Mahavira-charita. The peculiar merit of his poetry is the sublimity of descriptions,---a quality rarely met with in the productions of other Sanskrit bards. His style is classical, and though elaborate, is not deformed by extravagant refinements. His descriptions of mountain scenery are highly picturesque and truly grand. His glowing delineation of the sites of the Dandakaranya,---here shining in tender green,=there looking dismal with their vast and dreary extent,=and resounding in places with the rushing of the waterfalls ; and his descriptions of the transparent rills moving gently along, with their banks shaded with groves of canes, are indeed sublime and romantic. The pathetic strain,=describing the painful situation of Ayodhya's and Sita's lord, and depicting in breathing terms his tender feelings, roused by the sight of the familiar scenes, where he had lived for years with his beloved queen, whom his own cruel hands have banished from his kingdom, a victim to the howling forest, and whom he never hoped to see any more, can

"create a soul,
Under the ribs of death" ;

and move the senseless rocks.

The Mudra Rakshasa of Visakhsdatta is a drama of a quite different description from the works of Kalidasa and Bhavabhuti. It is entirely of a political character, and interesting in the display of Machiavelian artifices througout the work. The plot is well-conducted. The poet is much inferior to the two great masters of the art in fancy, imagery and brilliancy of thought. "The style though wanting in beauty is always vigorous and occasionally splendid". *

---

* Wilson's Hindu Theatre.

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

To Sri Harsha are ascribed the Ratnavali and the Nagánanda. Though the former is decidedly superior to the latter, there is little doubt, that they are the productions of the same hand. Whether they are, really, the works of the Royal Bard, or presented to his Highness by Dhavaka ( who got plenty of money in return ) as is alleged by the author of the Kavyaprakasa, we gain or lose little by the information. This, however, is certain that they were written in the reign of the above named Kashmerian prince, and thus we have a certain clue to their date.

The style in both, and especially in the Ratnavali, is very smooth, elegant, and exceedingly beautiful. The Prakrita of the Ratnavali, in patieular, is eminently elegant, and appears to equal advantage in no other drama. The poetry of the Ratnavali is, indeed, inferior to that of the works of Kalidasa and Bhavabhuti, both in fancy and elevation of thoughts ; but I cannot go so far as Prof. Wilson in the assertion, "that there is in it no poetic spirit, no gleam of inspiration, scarce even enough to suggest a conceit in the ideas". The Ratnavalí he proceeds, and not without reason, as it seems to me, "may be taken as one of the connecting links between the old and new school, as a not unpleasing production of that middle region through which Hindu poetry passed from elevation to extravagance."

The Venísanhára of Bhattanarayana is a drama of ordinary merit. The style though spirited is harsh. There is enough of passion, but very little of fancy. The peculiar excellence of the piece is the nice distinction of characters. Those of Duryodhana, Arjuna, Karna and Ashwathama, and above all, that of Bhimashsena, are faithfully delineated and minutely distinguished. Yet even in this our author failed, and miserably failed, in depicting the hero himself. Yudhisthira cannot but be the hero of the play. But he acts no prominent part in it. we do not find him at all in the stage till the commencement of the last act, where even he acts the part of a credulous fool, quite incompatible with the character of the hero of a N*ataka*.

The dramatic works of subsequent writers abound more or

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

less in extravagant refinements. A few only deserve notice. The Chandakaushika of Aryakshemishwara may be noted for its pathetic strain, elegant style, and the dramatic interest in the hero. The Anargharaghava of Murari is celebrated for its elaborate style, has little dramatic, merit, contains few poetic thoughts, and is full of hyperbolical extravagance and flat commonplace. The Mrigànkalekhá by Vishwanatha bears nothing original. Almost every incident and every thought in it, is borrowed from his predecessors. The Dhurtanartaka, the Hasyarnava and the Kautukasarvaswa are comic pieces or farces, being satirical attacks, the first upon the Sàiva ascetics, the second upon the licentious Brahmanas, assuming the character of religious mendicants, and the third upon princes who addict themselves to sensuality, and fail to patronize learning.

Even the present century is not altogether barren of dramatic compositions. But the productions cause only incredible labor in their birth, and are either born lifeless, or suffer a miserable life to the great uneasiness of their parents.

I shall conclude with a few remarks on the Hanumannataka or the *Maha* or great *Nataka* as it is emphatically called. It is evidently the work of several hands, the different fragments put together, aranged and formed into an entire whole ( most probably ) by Damodara Misra at the command of Bhoja. The poem contains passages of genuiue poetry ; but it has no consistence with the principles of drama. There is no mention of entrance or exit, and the poet himself is the speaker in several places.

K. C. B.

---

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

